अखिलभारतीय—प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला — १०३

# महाभारतस्थोद्योगभीष्मपर्वणोः तद्धितान्तप्रयोगानुशीलनम्

डॉ. जयवन्त चौधरी

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन—प्रकाशनविभागः




कविकुलगुरु—कालिदास—संस्कृत—विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)

| | | |
|---|---|---|
| **शीर्षकम्** | **–** | **महाभारतस्थोद्योगभीष्मपर्वणोः तद्धितान्तप्रयोगानुशीलनम्** |
| **लेखक** | **–** | **डॉ. जयवन्त चौधरी** |
| **प्रधानसंपादकः** | **–** | **आचार्यः श्रीनिवासः वरखेडी**<br>कुलगुरु, क.का.सं.वि., रामटेकम् |
| **संपादकः** | **–** | **आचार्यः मधुसूदनः पेन्ना**<br>संचालकः संशोधन–प्रकाशनविभागः<br>क.का.सं.वि., रामटेकम् |
| **संपादकमण्डलम्** | **–** | **डॉ. दिनकर मराठे,** क.का.सं.वि., रामटेक<br>**डॉ. वीना गाणु,** नागपुर. |
| **प्रकाशनवर्षम्** | **–** | **२०२०** |
| **आवृत्तिः** | **–** | **प्रथमा** |
| **मूल्यम्** | **–** | **रू. 295/-** |
| **आय.एस.बी.एन.** | **–** | **978-93-85710-55-1** |
| **मुखपृष्ठम्** | **–** | **श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्** |
| **मुद्रक** | **–** | **शिवनेरी ऑफसेट, नागपूर** |
| **प्रकाशकः** | **–** | **कुलसचिवः,**<br>**कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,**<br>**प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.** |

**PREFACE**

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Shrinivasa Varakhedi
Vice Chancellor, KKSU

# Kavikulaguru Kalidas Sanskrit University
# All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

## Chief Patron

Hon'ble Nitin Gadkari

Minister of Road, Transport & Highways of India

## Patron

Prof. Shrinivasa Varakhedi

Vice Chancellor, KKSU, Ramtek

## AIOC President

Prof. Gautam Patel

Chairman, Sanskrit Seva Samiti, Ahmedabad.

## AIOC General Secretary

Prof. Saroja Bhate

Professor of Sanskrit (Retd.), Pune University, Pune

## AIOC Local Secretary

Prof. Penna Madhusudan

Dean, KKSU, Ramtek

## Additional Local Secretary

Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

## Organising Committee

Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Shrinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

## मङ्गलाचरणम्

**येन धौता गिरः पुंसा विमलैः शब्दवारिभिः।**
**तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ।।**

**अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया।**
**चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः ।।**

**येनाऽक्षर समाम्नायमधिगम्य महेश्वरात् ।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ।।**

प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता यत्नेन सूत्रं प्रणयति स्म । तत्राशक्यं वर्णनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण।

# सङ्केताक्षरसूची

अ.को. — अमरकोशः
अ.शा. — अभिज्ञानशाकुन्तलम्
अष्टा. — अष्टाध्यायी
आ.प. — आदिपर्व
उ.प. — उद्योगपर्व
ऋग्वे. — ऋग्वेदः
का.वृ. — काशिकावृत्तिः
का.सू. — काशिकासूत्रम्
काशि. — काशिका
ग.सू. — गणसूत्रम्
गो.ब्रा. — गोपथब्राह्मणम्
छा.उ. — छान्दोग्योपनिषद्
तै.आ. — तैत्तिरीयारण्यकम्
तै.सं. — तैत्तीरीयसंहिता
दे.पु. — देवीपुराणम्
दे.भा. — देवीभागवतम्
परि.शे. — परिभाषेन्दुशेखरः
पस्प. — पस्पशाह्निकम्
पा.प्र.को. — पाणिनीयप्रत्ययार्थकोशः
पा.शि. — पाणिनीयशिक्षा
पा.सू. — पाणिनीयसूत्रम
पृ. — पृष्ठसंख्या
प्रश्न.उ. — प्रश्नोपनिषद्
प्रौ.म. — प्रौढमनोरमा
बा.म. — बालमनोरमा
बृ.उ. — बृहदारण्यकोपनिषद
बृ.सं. — बृहत्संहिता
ब्र.का. — ब्रह्मकाण्डम्

भाग. — भागवतम्

| | | |
|---|---|---|
| भी.प. | — | भीष्मपर्व |
| भो.प्र. | — | भोजप्रबन्धः |
| म.पु. | — | मत्स्यपुराणम् |
| म.भा. | — | महाभाष्यम् |
| महा. | — | महाभारतम् |
| मा.पु. | — | मार्कण्डेयपुराणम् |
| मे.को. | — | मेदिनीकोशः |
| मैत्र.उ. | — | मैत्रोपनिषद् |
| रघु.वं. | — | रघुवंशम् |
| रा.नि. | — | राजनिघण्टुः |
| रामा. | — | रामायणम् |
| ल.सि.की. | — | लघुसिद्धान्तकौमुदी |
| वा. | — | वार्तिकम् |
| वा.प. | — | वाक्यपदीयम् |
| वि.पु. | — | विष्णुपुराणम् |
| वेणी.सं. | — | वेणीसंहारम् |
| व्या.म.सू. | — | व्याकरणमहाभाष्यसूत्रम् |
| श.क.दु. | — | शब्दकल्पद्रुमः |
| शब्द.ब्र.मी. | — | शब्दब्रह्ममीमांसा |
| शि.आ.श.को. | — | शिवराम आप्टे शब्दकोशः |
| सं.व्या.इ. | — | संस्कृतव्याकरणशास्त्र का इतिहास |
| सा.व्या. | — | सारस्वतव्याकरणम् |
| सि.कौ. | — | सिद्धान्तकौमुदी |
| हरि.म. | — | हरिवंशमहापुराणम् |

# हृद्गतम्

सिद्धान्तकौमुद्यां तद्धिताधिकारे अवान्तराधिकारमाश्रित्य अर्थसामान्याश्रितानि सप्तदशप्रकरणानि विभक्तानि सन्ति।

तद्धितशब्दे तच्छब्देन पूर्वसम्पादितसमासादिप्रकृतिः गृह्यते। तेन ग्रहणसम्भवाभिप्रायेणैव सारस्वतव्याकरणे तद्धितप्रकरणप्रारम्भे चन्द्रकीर्तिव्याख्याने **तेषां पूर्वोक्तानां नामादीनाम् अर्थान्तरप्रकाशेन हितः तद्धितः** इत्युक्तम् । तत्रैव प्रसादव्याख्याने – **तेभ्यः पूर्वोक्तेभ्यः नामपदेभ्यः अर्थान्तरप्रतिपादन–शक्तिपदत्वेन हितः = अनुकूलः तद्धितः इति अन्वर्थसंज्ञाविज्ञानात् तद्धितसंज्ञा अणादीणाम्.....** इत्युक्तम्।

केचित्तु – **तेभ्यः = छात्रेभ्यः हितः सुकरत्वात् नानापदव्युत्पाद–कत्वाच्च तद्धितः** इति व्युत्पत्तिं कृतवन्तः। वस्तुतस्तु तद्धितसंज्ञा टिघुभादिसंज्ञावत् पाणिनिना न अपूर्वतया सृष्टा, किन्तु प्राचीनाचार्यकृतायाः तत्संज्ञायाः प्रसिद्धिवशात् प्राचीनाचार्येषु गौरववशाद्वा प्राचीनाचार्यकृता ''तद्धितः'' इति संज्ञा पाणिनिना यथातथं स्वीकृता।

तद्धितान्तप्रयोगाः दिनानुदिनं क्षीणाः सञ्जाताः। एतां दुर्दशां दृष्ट्वा व्याकुलाः प्रयोगमर्मज्ञाः दुःखेन वदन्ति – **गतास्तद्धितान्ता मृताः प्रक्रियाजाः हताः सन्धिबन्धाः लुङश्च प्रयोगाः।** इदानीन्तनानां जनानां प्रवृत्तिः कृदन्ते, सुबन्ते, कदाचित्तिङन्ते च दृश्यते। शिवमहिम्नस्तोत्रे तद्धितान्तशब्दाः बाहुल्येन प्रयुक्ताः सन्ति । तद्धितान्तप्रयोगे ह्रास अस्ति चेदपि वैयाकरणः, शाब्दिकः, नैयायिकः, मीमांसकः, शिक्षकः इत्यादि शब्दाः भाषातः बहिष्कर्तुं न शक्याः। कौन्तेयः, पार्थः, वासुदेवः, पाणिनिः, राघवः, वासिष्ठः, आञ्जनेयादि शब्दास्तद्धितज्ञानां मनसि भारतीयशब्दसंस्कृतिम् इतिहासयन्ति।

तद्धितज्ञानं सरलतया साकल्येन च भवतु इति मनसी निधाय पिपठिषूणां कृते पाथेयत्वेन पुस्तकमिदं सुकुमारमतिना मया साधितम्। विदुषाम् आवली नूनमिदं

पुस्तकमतिसामान्यं तथापि ममायं सुकुमारप्रयासः नन्दयतु सहृदयानां चेतांसि इति आशास्ये। पुस्तकस्यास्य प्रकाशनाय अनुमतिं दत्तवद्भ्यः अस्मत्प्रेरणास्थानेभ्यः कुलगुरुभ्यः आचार्यश्रीनिवासवरखेडीमहोदयेभ्यः नितरां कृतज्ञताञ्जलिं समर्पयामि। अखिलभारतीयप्राच्यविद्यासम्मेलनस्य शतकमहोत्सवे सुवर्णवासरेपुस्तकमिदं प्रकाशयिष्यते। तदर्थं सम्मेलनस्यास्य धुरां सार्थकतया ये वहन्ति तेभ्यः अस्मद्गुरुचरणेभ्यः स्थानिकसचिवेभ्यः मा.डॉ. मधुसूदन पेन्ना महोदयेभ्यः मनसा नमस्करोमि। तेषां कृपया प्रयत्नोऽयं सफलतां याति। तथैव सम्पादकमण्डलस्य डा.दिनकर मराठे, डा. वीणा गानू एतयोरपि धन्यवादाः। विश्वविद्यालयस्य मा.कुलसचिवाः अस्मद् अधिष्ठातारः सी.जी. विजयकुमारमहोदयाः, विभागप्रमुखाः डॉ. हरेकृष्ण अगस्तीमहोदयाः सर्वेषामेतेषां कार्तश्यं प्रकटयामि। मे सर्वकालमित्राणि, पितरौ, पत्नीश्च साधुवादाः। विश्वविद्यालयस्य उपक्रमोऽयं चिरकालमैतिह्यो स्मरिण्यते इति निश्चप्रचम्।

**भवदीय**
**डॉ. जयवन्त जनार्दनपंत कान्ता चौधरी**

# अनुक्रमणिका

प्रथमोऽध्यायः

# व्याकरणस्य महत्त्वम्

धर्मार्थकाममोक्षाभिधाश्चत्वारः पुरुषार्थाः प्रथन्ते। तत्र मोक्षस्यैव परमोपादेयत्वंय सच्चिदानन्दस्वरूपे स्थितित्वात्, नित्यत्वादात्मरूपत्वाच्च। तदुक्तम् – **आत्मनस्तु कामाय सर्वं प्रियं भवति इति**। इतरेषां त्रयाणां पुरुषार्थानां मोक्षोपायरूपतया अनित्यतया च न तादृशं महत्त्वं विद्यते। तथाहि – **कर्मचितो लोक...** इत्यादीनाम् अनित्यत्वश्रवणात् अनात्मत्वाच्च । चतुर्विधस्यापि पुरुषार्थस्य साधकोऽपौरुषेयो वेदः, आप्तोपदिष्टत्वाद्, अनाप्तानुक्तत्वाद्, ईश्वरनिःश्वसितत्वाद्, पुंदोषानस्पृष्टत्वाद्वा नितरां प्रामाण्यं भजते। तत्र परमपुरुषार्थविषये अस्यैव प्रामाण्यं, पुरुषपोषकारकस्य शास्त्रान्तरस्य त्वेतदनुगुणस्यैव प्रामाण्य – मभ्युपगतम्। तत्र अङ्गत्वेन प्रशस्तत्वाद् अङ्गतां गतेषु वेदाङ्गेषु वेदपुरुषस्य मुखमिव मुख्यं व्याकरणमिति न तिरोहितं विपश्चिताम्।

किञ्च शास्त्रस्यास्य मोक्षसाधनत्वं हरिणा इत्थं प्रतिपादितम् –

**तद्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**

**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते।।**[३]

अर्थात् – व्याकरणम् अज्ञानबन्धदुःखान्मोक्षस्य ब्रह्मसाक्षात्काररूपस्य द्वारमस्ति, अपभ्रंशरूपाणां दोषाणाम् अपनयसाधनं वर्तते । यथा आयुर्वेदः शारीरदोषाणां वातपित्तकफानां तत्प्रभवाणां च ज्वरादिरोगाणामपनयसाधनं तथा व्याकरणं वाग्दोषाणामपभ्रंशानामपनयसाधनमस्ति। एषा व्याकरणविद्या सर्वासु विद्यासु पवित्रविद्यात्वेन राजते।

---

१. छा.उ.८.१.६ २. बृ.उ.२.४.१५ ३. वा.प.ब्र.का.१४

अग्रेऽपि हरि: गदति –

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**

**इयं सा मोक्षमाणानामजिह्मा राजपद्धति:।।**[1]

अर्थात् – इदं व्याकरणशास्त्रं परमपुरुषार्थारोहणमार्गपङ्क्तीनां प्रथमं पादन्यासस्थलं वर्तते, तथा च मुमुक्षूणामवक्र: राजमार्ग: वर्तते।

**प्रधानञ्च षट्स्वङ्गेषु व्याकरणम्**[2] इति पतञ्जले: महाभाष्यवचनेन व्याकरणस्य मुख्यत्वं व्याकरणाध्ययनस्योपयोगित्वञ्च प्रतिपाद्यते। व्याक्रियन्ते = व्युत्पाद्यन्ते शब्दा: येन तत् व्याकरणम् । वेदाङ्गेषु मुखम् – **मुखं व्याकरणं स्मृतम्।**[3] तच्च व्याकरणं – **व्यवसायात्मिका बुद्धिर्मनो मे व्याकरणात्मकम्।**[4] इत्थं च यथा बुद्धि: व्यवसायात्मिका विश्लेषणात्मिका तथा मन: व्याकरणात्मकं येन जायते तत् व्याकरणम् इति।

ऋग्वेदे व्याकरणस्य प्रशंसा एवमस्ति –

**चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**

**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्या आविवेश।।**[5]

व्याकरणस्य अभिलाषाणां पूरणात् वृषभेति नाम्ना सम्बोधनमस्ति। अस्य चत्वारि शृङ्गाणि वर्तन्ते । तानि – १. नाम, २. आख्यातम् (क्रिया), ३ उपसर्ग:, ४ निपात:। त्रय: पादा: – भूत–भविष्यत्–वर्तमानकाला:। द्वे शीर्षे नित्यश्शब्दोऽनित्यश्चेति। अस्य सप्त हस्ता: सन्ति। यथा – प्रथमाद्य: सप्तविभक्तय:। त्रिधा – शब्दरूपवृषभ: उर:, कण्ठ:, शिर: इति त्रिषु स्थानेषु बद्ध: । अयं महान् देवो य: मनुष्येषु प्रविष्टो विद्यते।।

---

१. वा.प.ब्र.का.१६ २. म.भा.पस्प ३. पा.शि.४२

४. महा.१२.[illegible] ५. [illegible]

### व्याकरणशब्दस्य प्रक्रिया व्युत्पत्तिश्च

१. व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृति–प्रत्यय–विभागद्वारा निष्पाद्यन्ते शब्दाः अनेनेति व्याकरणम्। वि–आङ् इत्युपसर्गपूर्वककृञ्धातोः करणाधिकरणयोश्च इति सूत्रेण ल्युट्प्रत्यये **युवोरनाकौ** इति अनादेशे च व्याकरणमिति पदं सिद्ध्यति।

२. व्याक्रियन्ते – पृथक् क्रियन्ते साधुशब्दाः असाधुशब्देभ्यः प्रकृतिप्रत्ययादिज्ञान महिम्नाऽनेनेति व्याकरणम्।

३. लक्ष्यलक्षणे व्याकरणम्। लक्ष्यं (शब्दः) च लक्षणं (सूत्रम्) चैतत् समुदितं व्याकरणं भवति।

### अष्ट व्याकरणानि

संस्कृतव्याकरणे पाणिनेरष्टाध्यायीरूपस्य व्याकरणशास्त्रस्य सर्वाङ्गपूर्ण विवेचनमस्ति इत्यत्र नास्ति काचन विप्रतिपत्तिर्विपश्चितां भाषाविदाम्। षण्णवत्युत्तरनवशताधिकत्रिसहस्रसूत्रात्मिकायामष्टाध्याय्यां लौकिक – वैदिक – संस्कृतशब्दानां गाम्भीर्येण यत्स्वरूपं प्रदत्तं, तस्यैव विकासो वृत्ति – वार्तिक – भाष्य – न्यास – टीका – प्रक्रियादिभेदैरेतच्छताब्दिपर्यन्तमागतो वर्तते । तदानीमेव पाणिनीयां सरणिमादाय अन्यान्यपि व्याकरणानि प्रादुरभवन् । तत्रापि बहवो ग्रन्था विरचिताः। उक्तमपि बोपदेवेन यत् –

**इन्द्रश्चान्द्रः काशकृत्स्नापिशली शाकटायनः।**

**पाणिन्यमरजैनेन्द्राः जयन्त्याष्टादिशाब्दिकाः।।**[१]

एवञ्च इन्द्रचन्द्रकाशकृत्स्नापिशलिशाकटायनपाणिन्यमरजैनेन्द्रनामधेयाः प्रख्यातशाब्दिका अष्टसंख्याकाः सन्ति ।

---

१. सा.व्या.१.२

## त्रिमुनि व्याकरणम्

शब्दसंस्काराय पाणिनि–कात्यायन–पतञ्जलिनामकैः त्रिभिः मुनिभिः यद्यद् कृतम्, तत्तत्सर्वम् अद्यत्वे पाणिनीयव्याकरणपदेन व्यवह्रियते। तत्र भगवता पाणिनिना अष्टाध्याय्यां निबद्धानि सूत्राणि, तच्छेषतया गणपाठ–धातुपाठ–शिक्षाप्रभृतीनि च प्रणीतानि। तत्र अष्टाध्यायीस्थसूत्रेषु उक्त–अनुक्त–दुरुक्त–चिन्तां कुर्वता भगवता कात्यायनेन वार्तिकानि प्रणीतानि । ततः पाणिनि–कात्यायनोक्तयोः विषये उक्त–अनुक्त–दुरुक्तचिन्तां कुर्वता भगवता पतञ्जलिना महाभाष्यं प्रणीतम्। वार्तिके इव भाष्येऽपि यद्यपि उक्तानुक्तदुरुक्तचिन्तैव अस्ति, तथापि पूर्वपक्षि – पूर्वपक्ष्येकदेशि – सिद्धान्ति – सिद्धान्त्येकदेशि –तटस्थरूपाणां पुरुषाणां भाषणरूपत्वात् भाष्यमिति व्यवहार एव आगतः इति अभियुक्ताः वदन्ति। एतत् सूत्रवार्तिक–भाष्यरूपं समुदितं त्रिमुनि व्याकरणम् इति व्यवह्रियते।

## भगवान् पाणिनिः

संस्कृतवाक्यस्य आर्षाः ये प्राचीनव्याकरणग्रन्थाः, तेषु सर्वाङ्गपरिपूर्णं पाणिनीयव्याकरणमेव साम्प्रतं विद्यते। पाणिनीयव्याकरणं संस्कृतव्याकरणस्यानुपमो निधिः। अनेन पाणिनिना देववाण्याः समग्रं प्राचीनार्वाचीनवाङ्मयं मार्तण्डेनैव देदीप्यमानं कृतम्। भारतीयप्राचीनाचार्याणां शब्दविषयकं सूक्ष्मचिन्तनं, परिपक्वज्ञानम्, अद्भुतप्रतिभानिदर्शनं च कुरुते पाणिनीयशब्दानुशासनम्।

अष्टकम्, शब्दानुशासनम्, वृत्तिसूत्रमिति पर्यायैः व्यवह्रियमाणः ''अष्टाध्यायी'' नामकः ग्रन्थः न कस्यचित् विदुषः अपरिचितः। ग्रन्थमिमं भगवान् पाणिनिः व्यरचयत्। आचार्यः पाणिनिः भगवन्तं महेश्वरमाराध्य ''अइउण्'' इत्यादीनि चतुर्दश सूत्राणि अलभत ।

**कात्यायनः**

संस्कृतव्याकरणस्य त्रिवेणीसङ्गमे द्वितीयः कात्यायनः । अस्य कात्यायनः, कात्यः, पुनर्वसुः मेधाजित्, वररुचिः इत्यपि नामान्तरम्। महाभाष्ये पस्पशाह्निके वार्तिकमिदं पठ्यते[१] – **यथा लौकिकवैदिकेषु** इति । तस्य भाष्यम् इत्थं वर्तते – **प्रियतद्धिता दाक्षिणात्या। यथा लोके वेदे च इति प्रयोक्तव्ये यथा लौकिकेषु वैदिकेष्विति प्रयुञ्जते** । अनेन विदितं भवति – कात्यायनमहर्षिः दक्षिणदेशीयः इति । पाणिनेरष्टाध्याय्या उपरि वार्तिकानि प्रणीतान्यनेन महर्षिणा।

कात्यायनात् पूर्वमेव अष्टाध्याय्याः सर्वत्र प्रचारो बभूव। तत्र सूत्राणां व्याख्याने बहवः वार्तिककाराः स्वयोगदानमददुः। यथा – भारद्वाजः, सौनागः, क्रौष्ट्रीयः, कात्यायनः इत्येते प्रमुखाः वार्तिककाराः बभूवुः। तेषु कात्यायन एव प्रमुखः।

वार्तिकलक्षणञ्च –

**उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।**

**तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः।।**[२]

वार्तिककारस्य कात्यायनस्य कालविषये वैमत्यं दृश्यते। केचित् तं पाणिनिसमकालिकं मन्यन्ते, अपरे तु पाणिनेर्द्वित्रिशतकपश्चाद्वर्तिनम्। यथा – डॉ.कामदेव झा महोदयाः पाणिनेः कालः ई.पू.षष्ठशताब्दिः, तथा कात्यायनस्य कालः ई.पू.चतुर्थशताब्दः इति स्वीकुर्वन्ति।[३]

---

१. म.भा.छायामङगलश्लोकेषु

२. पाराशरोपपुराणम्

३. शब्द.ब्र.मी.पृ.३,४

**पतञ्जलि:**

**योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।**

**योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि।।**[१]

इत्ययं श्लोक: भगवत: पतञ्जले: योगशास्त्रे व्याकरणशास्त्रे वैद्यकशास्त्रे च वैदष्यं प्रदर्शयति। **अञ्जलौ पतित** इति व्युत्पत्तिमाश्रित्य तन्नाम सार्थकमभूत् । गोनर्ददेशे गोणिकानाम्नी सूर्योपासिका सूर्यायैकदाऽर्घ्यं ददाति स्म। तदा तस्याञ्जलौ आदिशेष: पपात। तदा सा माताऽवादीत् – **त्वं ममाञ्जलौ पतित:, अतस्तव नाम पतञ्जलि:।**[२] पतन्तोऽञ्जलयो यस्मिन्निति पतञ्जलि:। स एव पतञ्जलि: सागरवत् विस्तृतं महाभाष्यं व्यरीरचत्। महाभाष्ये पाणिनिसूत्राणां, कात्यायनवार्तिकानाञ्च व्याख्या वर्तते। सङ्ग्रहग्रन्थस्थविषया अपि अत्र प्रतिपादिता:। गोनर्दीय:, गोणिकापुत्र:, नागनाथ: इत्यप्यस्य नामान्तराणि। महाभाष्यकर्तु: पतञ्जले: देशकालादिपरिचय: विशालेऽस्मिन् ग्रन्थे नेषदपि उपलभ्यते।

## वेदाङ्गानि

अङ्गान्यस्मिन् सन्तीत्यङ्गी। वेदोऽङ्गिरूपेण व्यपदिश्यते। तस्य वेदस्याङ्गानि छन्द:, कल्प:, ज्यौतिषं, निरुक्तं, शिक्षा, व्याकरणमिति षड् विराजन्ते। तत्रापि छन्द: वेदस्य पादरूपेण, कल्पो हस्तरूपेण, ज्योतिश्शास्त्रं नेत्ररूपेण, निरुक्तं श्रोत्रात्मना, शिक्षा घ्राणेन्द्रियत्वेन, व्याकरणं मुखरूपेण चाभिधीयते। उक्तञ्च पाणिनीयशिक्षायाम्–

**छन्द: पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**

**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**

१. म.भा.उपोद्घात: २. व्या.आ.स्तो.पृ.५११

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**

**तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।।**[1]

एतानि षडङ्गानि वेदविद्यायाः कृतेऽत्यन्तमुपकुर्वन्ति। वेदे हव्यो ऋचो वर्तन्ते। गायत्रीछन्दस्त्रिष्टुप्छन्द इत्याद्याः । तत्र किं छन्दोऽनुसृत्य का ऋक् कथमुच्चारणीयेति ज्ञानाय छन्दोज्ञानमावश्यकम् । एवमेवेतराण्यप्यङ्गानि वेदोपकारकाणि भवन्ति । वेदे भागद्वयं वर्तते। तत्र पूर्वभागः कर्मकाण्डमिति, उत्तरो भागो ज्ञानकाण्डमिति च व्यपदिश्यते। सोऽयं वेद उदात्तानुदात्तादिस्वरानुपूर्वीसहित एवोच्चारणीयः। विपर्यासे प्रत्यवायश्रवणात्। उक्तं च महाभाष्ये –

**मन्त्रो हीनस्स्वरतो वर्णतो वा**

**मिथ्याप्रयुक्तो न तमर्थमाह।**

**स वाग्वज्रो यजमानं हिनस्ति**

**यथेन्द्रशत्रुस्स्वरतोऽपराधात्।।**[2]

उपर्युक्तरीत्या वेदानामुच्चारणं विधिवत् यथा स्यात् तदर्थं वेदाङ्गान्यप्यावश्यकानि। अतो वेदाङ्गसहितो वेदोऽध्येतव्यः। उक्तञ्च – **ब्राह्मणेन निष्कारणो धर्मष्षडङ्गो वेदोऽध्येयो ज्ञेयश्च**[3] इति।

## वेदाङ्गेषु व्याकरणस्य मुख्यत्वप्रतिपादनम्

वेदानां रक्षार्थं व्याकरणाध्ययनमावश्यकम्। मुखं व्याकरणं स्मृतमित्यत्र मुखमित्यस्य मुख्यमित्यर्थः। मुखमिव प्रधानत्वाद् व्याकरणस्य मुख्यत्वं सिद्धम्। स हि मुख्यः, यथा सर्वेभ्यो हस्तादिभ्योऽवयवेभ्यः पूर्वं मुखमवलोक्यते, तद्वदेव सर्वेभ्योऽङ्गान्तरेभ्यः प्रथमं यस्यास्ति सत्ता, स एवावगम्यते । तस्मान्मुखमिव मुख्य

---

१. पा.शि.४१,४२ २. म.भा.पस्प. ३. म.भा.पस्प.

इति शाखादयान्तेन (शाखादिभ्यो यः, ५.३.१०३) मुख्यशब्देनाभिधीयते। अर्थात् मनुष्यस्य शरीराङ्गेषु मुखं यथा मुख्यमङ्गं भवति तद्वदेव शिक्षाकल्पाद्यङ्गेभ्यो व्याकरणमेव वेदस्य मुख्यमङ्गं भवति। इदञ्च व्याकरणं लौकिकवैदिकभेदेन द्विधा व्यभाजि। तत्र लौकिकवैदिकशब्दानामन्वाख्यानाय वेदाध्येतॄणां, तदध्यापकानाञ्च व्याकरणज्ञानमत्यावश्यकम्। मुखे तावत् ताल्वादिस्थानानि, आभ्यन्तरप्रयत्नाश्च वर्तन्ते । तत्र वेदोच्चारणसमये कुत्र कस्य वा वर्णस्य लोपः कर्तव्यः, कुत्र कस्य को वर्ण आदेशः, को वा वर्ण आगम इत्यादिकं सर्वं व्याकरणेनैव ज्ञायते। एवञ्च वेदार्थज्ञानपूर्वकं शुद्धैस्तत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानद्वारा स्वर्गं, तद्वारा मोक्षञ्च परम्परया जनयति व्याकरणम्। उक्तं च महाभाष्ये[१] – **रक्षार्थं वेदानामध्येयं व्याकरणम्** इति।

एवं **प्रकृतिवद्विकृतिः कर्तव्येति** न्यायाद्विकृतावुपकारातिदेशे पदार्था अपि तत्पृष्टभावेनातिदिश्यन्ते । यथा **अग्नये जुष्टं निर्वपामि**[२] इति मन्त्रे अग्नय इति चतुर्थ्यन्तस्योपात्तत्वात् **सौर्यं चरुं निर्वपेत्**[३] इति मन्त्रेऽपि सूर्यदेवताकविकृतियागे सूर्यायेति चतुर्थ्यन्तेन भाव्यमिति वैयाकरण एवोहितुं शक्नोति। एवं रीत्यापि व्याकरणं वेदस्याङ्गं भवति।।

एवमेव **स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत**[४] इति मन्त्रस्थलेऽपि स्थूला। चासौ पृषती च स्थूलपृषतीति तत्पुरुषो वा, स्थूलानि पृषन्ति यस्यां सा स्थूलपृषतीति बहुव्रीहिर्वेति संशये यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, यद्यन्तोदात्तत्वं ततस्तपुरुष इत्येवं रीत्या तत्तत्स्वरानुसारेण समासनिर्णयकरणद्वाराऽपि व्याकरणं वेदस्य मुख्यमङ्गं भवति। एवमेव लाघवेन शास्त्रप्रक्रिया–निर्वाहार्थमसन्देहार्थञ्च व्याकरणं वेदस्य मुख्यमङ्गं भवति।

---

१. पा.शि.४१,४२ २. तै.सं.१.१.४ ३. तै.सं.२.३.२.३ ४. म.भा.पस्प.

उपर्युक्तरीत्या शिक्षाद्यङ्गेभ्यो व्याकरणमेव वेदस्य मुख्यमङ्गं भवतीति निश्चप्रचमेतत्।

## दर्शनानि

इह खलु निखिलचराचरजगति सर्वेषु चराचरप्राणिषु मनुष्यास्सर्वश्रेष्ठतमाः। अत एवेतरप्राणिभ्यो मनुष्याणां महत्त्वमनादितया वरीवर्ति। श्रूयते चाभाणकम् — **प्राणिनां नरजन्मदुर्लभमिति।** मनुष्यसमाजे मनुष्याणामैहिकामुष्मिकफलद्वयं प्रधानं भवति। तत्र राज्यदारासुतादीन्यैहिकफलत्वेन मोक्षश्चामुष्मिकफलत्वेन च महर्षिभिर्व्यवह्रियते। धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः भवन्ति। तेषु चतुर्ष्वर्थकामावधमौ। धर्मो मध्यमः। मोक्षः उत्तमः। तत्रार्थकामावैहिकसुखसाधने भवतः। तयोः प्राणिनां दुःखजनकत्वात् अप्राधान्यम्। तयोरप्यर्थाख्यः पुरुषार्थ उपायमूलकत्वादप्रधानमिति, पाञ्चभौतिकसुखप्रदत्वेन कामः पुरुषार्थः प्रधानमिति केचिदभिप्रयन्ति।

वस्तुतस्तु धर्मपुरुषार्थो द्विविधः। प्रवृत्तिरूपो निवृत्तिरूपश्च। अभ्युदयसाधनमूलको धर्मः प्रवृत्तिधर्मः। मोक्षपुरुषार्थसाधनो धर्मो निवृत्तिधर्मः। उपर्युक्तेषु चर्तुर्षु पुरुषार्थेषु मोक्षो मुख्यतमः पुरुषार्थः। स संसारमूलकारणनाशेन जायते। तस्य मूलकारणस्यान्वेषणे प्राज्ञाः महर्षयस्स्वस्वबुद्ध्यनुसारं तपोबलेन च मुमुक्षून् प्रति भिन्नभिन्नमार्गान् प्रादर्शयन्। त एव दार्शनिकाः। ते चास्तिकनास्तिकभेदेन द्विविधाः। वेदप्रामाण्यमङ्गीकृत्य तत्प्रदर्शितमार्गानुसारं मोक्षसाधनाभिलाषिणः आस्तिकाः। ये तु स्वबुद्धिबलेनैव संसारस्य मूलकारणमन्विष्यन्ति ते नास्तिकाः। एवं रीत्या दर्शनान्यप्यास्तिकनास्तिकभेदेन द्विधा विभक्तानि। वैशेषिकन्याय– सांख्य– योग– पूर्वमीमांसा– उत्तरमीमांसा इति षडास्तिकदर्शनानि । एतानि सर्वाण्यपि दर्शनानि मुमुक्षूणां मोक्षप्रदर्शकानि भवन्ति।

एवं स्थिते व्याकरणदर्शनमपि मोक्षदर्शनमिति तदध्ययनेनापि मुमुक्षूणां मोक्षो जायत इति केषाश्चिद्विपश्चितामाशयः। परन्तु पूर्वोक्तास्तिकनास्तिकदर्शनेषु व्याकरणस्यानन्तर्भावात्. केनापि दार्शनिकेन व्याकरणस्यापि दर्शनत्वसिद्धेरप्रदर्शितत्वाच्च कथमादौ व्याक रणस्य दर्शनत्वसिद्धिः ? कथं वा तस्य मोक्षसाधनत्वमिति प्रश्न उदेति।

वस्तुतस्तु व्याकरणस्यापि दर्शनत्वसिद्धौ ऋष्यनुभवसिद्धानेक– प्रमाणोपलभ्यमानत्वाद् व्याकरणमपि मोक्षसाधकं दर्शनं भवतीति वैयाकरणाः। इत्थं हि तेषामाशयः।

**व्याकरणस्य दर्शनत्वसिद्धिः**

यद्युच्यते व्याकरणशास्त्रं पदसाधुत्वलक्षणमेव, कथं दर्शनपदव्यपदेश्यम्। उक्तमपि पराशरोपपुराणे –

**पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्।**

**सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चनः।।**[१]

परन्तु अत्रेदमवधेयं यद् व्याकरणं द्विधा। ''प्रक्रियात्मकम्'' तावत् प्रथममपरञ्च ''दार्शनिकम्''। अतः स्फुटमेव व्याकरणदर्शने आदावेवोक्तवन्तो दार्शनिकाचार्यभर्तृहरिमहोदयाः यत् –

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**[२]

इत्यादयः श्रुतयः प्रमाणयन्ति यच्छब्दब्रह्मैव जगतो हेतुर्वर्तते इति।

---

१. प्रौ.म.प्रस्तावनायाम्

२. वा.प.१.१

प्रथमं तावच्छब्दब्रह्म प्रणवरूपम् आसीत्, ततोऽक्षरसमाम्नायरूपम्। ततश्चतुर्णां वेदानां सृष्टिरभूत्। सूक्ष्मप्रणवरूपं ब्रह्म परब्रह्मपदेन, त्रिमात्रेण ओङ्कारेण, अपरब्रह्मपदेन तथा शब्दब्रह्मपदेन जानन्ति विद्वांसः। श्रुतिरपि प्रमाणयति यद् – **एतद्वै सत्यकामः परं चापरं च ब्रह्म यदोङ्कारः तस्माद्विद्वानेतेनैवायत–नेनैकतरमन्वेति**[१] इति।।

अनेन प्रकारेण परब्रह्मप्राप्त्युपायः ओङ्कारः । यतो हि तस्मादेकतरं परब्रह्म प्राप्नुवन्ति। उक्तमपि –

**द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च यत्।**

**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।**[२]

वैयाकरणास्तु शब्दब्रह्म एव परब्रह्मेति मन्यन्ते। शब्दब्रह्मणः प्राप्त्युपायश्च उक्त आचार्यभर्तृहरिपादैः –

**तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः।**

**तस्य प्रवृत्तितत्त्वज्ञस्तद् ब्रह्मामृतमश्नुते।।**[३]

अर्थात् शब्दसंस्कारानन्तरमेव व्याकरणस्यावबोधो जायते। शब्दसंस्कारे जाते सति साध्वसाधुशब्दानां विवेको जायते। अतोऽसाधुशब्दानामुपघातो भवति। तदेव शब्दब्रह्मणः सिद्धिः सिद्ध्युपायो वा। उक्तमपि भगवता भाष्यकारेण यत् – **एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग् भवति**[४] इति।

अर्थात् शब्दब्रह्मस्वरूपत्वाद् आद्यन्तरहितत्वं विभुत्वञ्चास्ति शब्दस्य। तस्मादेव शब्दरूपात्मकमिदं जगदुत्पद्यते।

अनेन प्रकारेण व्याकरणस्य महत्त्वप्रतिपादनेन ज्ञायते यद् व्याकरणशास्त्रमपि

---

१. प्रश्न.उ.५.२०  २. मैत्र.उ.६.२२  ३. वा.प.१.१३१  ४. म.भा.पस्प.

दर्शनशास्त्रम् अस्तीत्यत्र नास्ति शङ्कावकाशः।

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयत्**[१]**, ब्रह्मैवेदं सर्वम्**[२]**, आत्मैवेदं सर्वम्**[३] इत्यादिश्रुत्याधारेण यथा जगतो हेतुः सत्यत्वमेकत्वं ब्रह्मत्वम् आत्मत्वञ्च ब्रह्म एवास्तीत्यादि वेदान्तादिदर्शनं समर्थयति, तथैव शब्दब्रह्मविषयक—माध्यात्मिकमनाध्यात्मिकं वा व्याकरणमपि दर्शनत्वेन समर्थयन्ति श्रुतयः। तथा हि —

**वागेवार्थं पश्यति वागेवार्थं निहितं सन्तनोति। वाच्येव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते, ओमित्येतदक्षरं परब्रह्म तदेवोपासितव्यम्**[४]**, ओमिति ब्रह्म**[५] इत्यादयः श्रुतयः प्रमाणयन्ति यच्छब्दब्रह्मैव जगतो हेतुर्वर्तते।

तस्य शब्दब्रह्मणः प्रवृत्तिव्यवहारकारणं, समेषां पदार्थानां हेतुरूपां पश्यन्तीं ये विदन्ति, ते तया विवृतं ब्रह्म प्राप्नुवन्तीत्याशयः। तस्य शब्दब्रह्मणः प्रवृत्तिश्च षोढा भवति — जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, विनश्यतीत्यादिप्रकारेण षड्भावविकाराः प्रोक्ताः। अपि तु सर्वे जानन्ति यद् गीर्वाणवाणी देववाणी अमरभारती सर्वप्रथममुन्नतशिखरारूढा लोककमनीयकलया च सम्पन्नासीत्। अस्यामेव चत्वारो वेदाः, वेदाङ्गानि, षट् शास्त्राणि, पुराणानि चोपनिबद्धानि । तत्रापि व्याकरणशास्त्रं प्रधानतां भजते। उक्तवन्तो भर्तृहरिपादाः —

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः।**

**प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः।।**[६]

१. छा.उ.६.१.१ २. नृसि.उ.७.३

३. छा.उ.७.२५.२ ४. तार.उ.२.१

५. तै.उ.शिक्षाध्याये सप्तमोऽनुवाक ६. वा.प.१.११

इत्याचार्यवचनं पाणिनिशिक्षानुसारं वर्तते। यतो हि पाणिनिशिक्षायाम् – **मुखं व्याकरणं स्मतम्**[१] इत्यादिवचनेनापि ज्ञायते यत् समेषां शास्त्राणां शब्दार्थभूतं व्याकरणाधीनत्वाद् व्याकरणस्य प्रधानता भवत्येव। इदं व्याकरणशास्त्रं केवलं प्रकृतिप्रत्ययादिविभागप्रदर्शकम्, उताहो पदसाधुत्वलक्षणमेव नास्ति, परन्तु ब्रह्मज्ञानसाधकमपि। उक्तवन्तोऽप्याचार्य हरिपादाः –

**शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।**

**समारम्भास्तु भावानामनादि ब्रह्म शाश्वतम्।।**[२]

अपि च –

**उपायाः शिक्षमाणानां बालानामुपलालनाः।**

**असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।।**[३]

इति हर्युक्तन्यायेन सारल्येन शब्दसाधुत्वज्ञानाय प्रकृतिप्रत्ययादीनां मृषा कल्पनया स्फोटरूपब्रह्मणः ज्ञापनेन, सिद्धान्तप्रतिपादनेन दर्शनशास्त्रेष्वपि व्याकरणदर्शनं प्रधानतामादधाति । अपि च – **लघ्वर्थं चाध्येयं व्याकरणम्।**[४] अथ च – **सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः**[५] इति भगवतः पतञ्जलेर्वचनेन वर्णराशिः ब्रह्मप्रतिपादकोऽस्ति। अत्रैवाचार्यनागेशभट्टः वर्णोपदेशमपि ब्रह्मज्ञानसाधकं स्वीकृतवानिति। आचार्यभर्तृहरिपादास्तु अञ्जसोक्तवन्तो यद् –

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**

**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः।।**[६]

१. पा.शि.४२ २. वा.प.२ ३. वा.प.२

४. महा.व्याकरणस्य प्रयोजनानि ५. म.भा. ६. वा.प.१.१६

इति वचनेन व्याकरणशास्त्रं वस्तुतः मोक्षसाधकमस्ति ।अतः एवास्य पाणिनिदर्शनम् इति नाम्ना प्रसिद्धिरपि वर्तते।

इदं स्फोटात्मकं ब्रह्म केवलमर्थबोधकमेव न, अपि तु अखण्डजगतः आधारोऽस्ति। तस्मिन् ज्ञाते कैवल्यस्य प्राप्तिर्भवति । यतो हि मूलकारणे ज्ञाते सति मुक्तिर्भवति। उक्तमपि – **ज्ञानेन मुक्तिर्न तु मण्डनेन**[१] इति।

किमधिकम् अखिललोकोऽयं शब्दं विना कथमपि व्यवहर्तुं न शक्नोति, अतः शब्दब्रह्मणो विवर्तभूतमिदं जगदपि वर्तते। प्रतिपादितमपि हरिणा –

**शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी।**

**यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते।।**

**षड्जादिभेदा शब्देन व्याख्यानो रूप्यते यतः।**

**तस्मादर्थविधाः सर्वे शब्दमात्रासु निश्चिताः।।**

**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**

**छन्दोभ्य एव प्रथममेतद् विश्वं व्यवर्तत।।**[२]

### महाभारतस्य महत्त्वम्

भगवतो वेदव्यासस्य विज्ञानभूम्नः सर्वोत्तमं रत्नमिदं महाभारतं भारतीयजीवनं सम्पूर्णमालोकयति। अयमेक एव ग्रन्थः सकलवेदवाङ्मयस्य चतुर्विधपुरुषार्थानां, सामाजिक सांस्कृतिक–राजनैतिकचेतनायाश्च प्रतिनिधिः वर्तते।

---

१. पञ्चतन्त्रम्

२. वा.प.१.१८–२०

सकलविषयैस्समुल्लसितमिदं महाभारतं विचिन्तकैः पञ्चमवेदः इति सम्मानितं वर्तते। एकस्मिन् महाभारते ज्ञाते चतुर्दशविद्याप्रतिपाद्यं सर्वमेव विज्ञातं भवेदिति कथने नातिशयोक्तिः। अत एवोच्यते –

**धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।**

**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्॥**

अस्मिन्महाभारते सकलशास्त्रतत्त्वैस्साकं प्रत्येकं मानवस्य जीवनपरमार्थभूतानां चतुर्विधपुरुषार्थानां सन्निवेशः कृतः इत्यपि विज्ञायते। यथा –

**अर्थशास्त्रमिदं पुण्यं धर्मशास्त्रमिदं परम्।**

**कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना॥**[२]

वस्तुतः महाभारतं गूढार्थयुक्तं, मोक्षदायकं, ज्ञानविज्ञानरत्नं, कर्मभक्तियोगयोश्शास्त्रम्, अध्यात्मविद्यायाः जनकं, भारतीयेतिहासस्य पथप्रदर्शकं, सर्वार्थसाधकं, सर्वशास्त्रभाण्डागारमिति सम्प्रवदन्ते विद्वांसः॥

महाभारतं भारतस्योज्ज्वलज्ञानपरम्पराया जीवद्रूपं वर्तते। वेदोपनिषदां रहस्यं जानन्नपि महाभारताख्यानानभिज्ञो जनो विचक्षणो भवितुं नार्हति । महाभारतवैशिष्ट्यविषये भगवान् वेदव्यासोऽब्रवीत्स्वयम्। तथा हि –

**यो विद्याच्चतुरो वेदान्साङ्गोपनिषदो द्विजः।**

**न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः॥**[३]

१. महा.आ.प.५६.३३ ३. महा.आ.प.५६.२१

३. महा.१.२

अस्य ग्रन्थस्याध्ययनेनैवानुस्यूतायाः भारतीयपरम्परायाः मूर्तं रूपं जानीमः। भगवता व्यासेन महाभारते भारतीयपरम्परायाः आधारभूतानां विषयाणामुल्लेखः कृतः।[1] भगवद्गीतेति अखिलविश्वस्य वाङमयप्रपञ्चस्य ग्रन्थरत्नमस्य महाभारतस्याङ्गत्वेन वरीवर्ति । विष्णुसहस्रनाम, अनुगीता, भीष्मस्तवराजः, गजेन्द्रमोक्षः इति दर्शनरहस्यानि अत्रैव राजन्ते।

इत्थं चतुर्विधपुरुषार्थसाधकं महाभारतं सर्वज्ञानविज्ञानरहस्यस्य शास्त्रमित्यभिधीयते।

**महाभारतस्वरूपम्**

सम्पूर्णवाङ्मये समुपलभ्यमानेषु इतिहासग्रन्थेषु महाभारतम् अतिविशालग्रन्थत्वेन राजते। महाभारतमहाकाव्यम् अष्टादशभिः पर्वभिः विभूषितं वर्तते। तद्यथा –

| | | |
|---|---|---|
| १. आदिपर्व | २. सभापर्व | ३. वनपर्व |
| ४. विराटपर्व | ५. उद्योगपर्व | ६. भीष्मपर्व |
| ७. द्रोणपर्व | ८. कर्णपर्व | ९. शल्यपर्व |
| १०. सौप्तिकपर्व | ११. स्त्रीपर्व | १२. शान्तिपर्व |
| ११. अनुशासनपर्व | १२. आश्वमेधिकपर्व | १३. आश्रमवासिकपर्व |
| १४. मौसलपर्व | १५. महाप्रास्थानिकपर्व | १६. स्वर्गारोहणपर्व |

इमानि च पर्वाणि पुनः उपपर्व–श्लोकादिभिः विभक्तानि सन्ति। समग्रमहाभारते चतुर्नवतिः (९४) उपपर्वाणि सन्ति। तानि यथा –

१. महा.आ.प.६२.७०

प्रत्येकं पर्वण: स्वविशालमद्वियञ्च महत्त्वमस्ति । पर्वनाम्ना एव तस्मिन् पर्वणि ये अंशा: उधृता: सन्ति हे तस्य पर्वण: नाम सार्थकं कुर्वन्ति । महाभारतस्य पर्व कारणादेव महाभारतस्य कथाया: परस्परसम्बन्ध: ज्ञायति । पर्व शब्दस्य मुलार्थ: भवति मेलनम् योजनमित्त्यादि ।

पूर्वकथामुत्तरकथया योजनात् महाभारतस्य विभाजनस्य अयं नामकरणं यथार्थमभवत् । एतेषां पर्वणां नामकरणं घटनाधारेण कृत: पर्वणां विभजनं पुन: अध्यायेषु अभवत् ।

ग्रन्थेऽस्मिन् अष्टोत्तरशताधिकद्विसहस्रम् (२१०८) अध्याया: तथा चतुश्चत्वारिंश– दुत्तरैकसहस्राधिकलक्षश्लोकाश्च (१,०१,०४४) वर्तन्ते।[१]

## महाभारतस्य कर्ता

ग्रन्थरचनाकाले इव ग्रन्थकर्तु: विषयेऽपि विप्रतिपत्तयोऽनल्पास्सन्ति । एकं सौभाग्य यत् मूलत: महाभारतं व्यासेन प्रणीतमित्यत्र विवादो न दृश्यते। यतो ह्युपलभ्यमान: सर्वोऽपि ग्रन्थ: नैव व्यासप्रणीत:। काले कविभिरन्यै: स्वीया रचनास्तत्र संयोजिता:। व्यासोत्तरकाले च निर्मितान्युपाख्यानानि समावेशितानीति बहवो विमर्शका: मन्यन्ते। डॉ. राधाकृष्णन् महोदय: महाभारतस्य बृहत्स्वरूपं ग्रन्थरचनादूर्ध्वं सहस्रसंवत्सरेभ्य: क्रमश: वृत्तमिति अभिप्रैति।[२]

महर्षिवेदव्यासप्रणीतं श्रीमन्महाभारतमार्यावर्तस्य राष्ट्रियेतिहासस्य महद् ग्रन्थरत्नं वर्तते। अस्य कर्ता चिरञ्जीवी वेदव्यासो महाभारतयुद्धस्य साक्षात् द्रष्टा।

**व्यास –**

ऐतिहासिकव्यक्ति: भारतीयपरम्परानुसारं व्यास अस्तित्त्ववान्। ब्राह्मणआरण्यकग्रन्थेषु बहुत्र व्यासनामोल्लेखनं दरीदृश्यते। यथा तैत्तिरीयारण्यके – **स होवाच व्यास: पाराशर्य:।**

१. महा. BORI

२. History of Philosophy Eastern and Western, P.85

गोपथब्राह्मणे च – **व्यासः प्रोवाच**[१] इत्युल्लेखः दृश्यते।

अष्टाध्याय्यां पाणिनिनाऽपि – **पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः**[२] इत्यस्मिन् सूत्रे पाराशर्यस्य व्यासस्य उल्लेखोऽकारि।

बालमनोरमायां **पाराशर्यो व्यासः**[३] इत्यैुक्तवा इतोऽपि स्पष्टतां प्राकटयत् व्याख्याकारः। काशिकाकारः जयादित्योऽपि **गर्गादिभ्यो यञ्**[४] इति सूत्रव्याख्यनावसरे **व्यासः पाराशर्येऽर्थे**[५] इति लिलेख।

अनेन ज्ञायते यत् भिक्षुसूत्राणां ब्रह्मसूत्राणां वा रचना व्यासेनैव अकारि इति। अतः वयं निश्चयेन वक्तुं शक्नुमः यत् महाभारतस्य कर्ता व्यासः ऐतिहासिक एव। अतः व्यासतुल्यं महनीयव्यक्तित्वं सहस्राब्दे एकवारमेव उदेति।

**महाभारतस्य रचनाकालः**

महाभारतस्य रचनाकालविषये महान् मतभेदः दरीदृश्यते। केचन इतिहासज्ञाः आमनन्ति यत् महाभारतस्य रचना क्री.पू.चतुर्थ्यां (400 A.D.) शताब्द्यां जातेति। अन्ये तु क्री.श. चतुर्दशीं शताब्दिं (400 B.C.) स्वीकुर्वन्ति।

महाभारतरचनाकालविषये कतिपयानि परस्परं विरोधिमतानि। यथा –

क. **मैकडॉनल्**महोदयस्य मतम्–यजुर्वेदे महाभारतीयधृतराष्ट्रस्य पुरुषप्रधानस्य विचित्रवीर्यस्य नामोपलब्धेः महाभारतस्य रचनारम्भकालः क्री.पू. दशमशताब्दतः पश्चाद्वर्ती कथमपि न भवितुमर्हति। अस्य विस्तृतरूपञ्च

१. गो.ब्रा.१.१.२९ २. अष्टा.४.३.११०

३. सि.कौ.बालमनोरमा व्याख्या, ४०३०११०

४. महा. BORI ५. काशि.४.१.१०५

क्री.पू. तृतीयशताब्दादारभ्य क्रीस्ताब्दारम्भकालावधि सञ्जातम्।[१] (B. C. 1000 & B. C. 300 to A. D.)

ख. **हाप्किन्स** महोदयस्य मतम् – क्री.पू. चतुर्थशताब्द्याः परं क्री.पू. द्विशताब्दीमध्ये किय देशे (यत्र कृष्णस्य भगवदवतारत्ववार्ता लभ्यते) रचनाकालः। अपरांशस्य क्रीस्तीय द्वितीयशताब्दात् परं क्रीस्तीयचतुर्थशताब्दीपर्यन्तं रचना समयः।[२]

ग. **हेच्.हेच्.विल्सन्** महाशयस्याभिमते, कर्नविल्फोर्डमहोदयस्य गणनायां च महायुद्धं (भारतोक्तम्) क्री. पू. सप्तत्यधिकत्रयोदशशताब्द्यां (१३७० वि.सि.) समाप्तमिति।[३]

घ. **बेन्टली**[४] महोदयस्यानुसारं पाण्डवप्रधानस्य युधिष्ठिरस्य काल : क्री.पू. पञ्चसप्तत्युत्तरशताब्द्यां निरूपितः। एवं गदति महाभारतस्य टीकाकारः श्रीनीलकण्ठः।

ङ. **विन्टर्नित्ज**[५] महाशयः क्री. पू. चतुर्दशशताब्दादारभ्य क्री. श. चतुर्थशताब्दपर्यन्तकालः महाभारतस्य ब्रवीति।

च. **सि.वि.वैद्य**[६] महोदयस्य मतं यथा – क्री. पू. पञ्चशताधिकद्विशताब्द्यां महाराजाशोकसन्निहिते काले पतञ्जलेरभ्युदयकालात् पूर्वपर्यन्तो महाभारतरचनाकालः। कारणमिदं निर्दिश्यते यत् ग्रीस्देशीयो वाग्मी डन् क्राइसोष्टम (Don Chrysostom) क्रीस्तीयप्रथमशतके प्रादुर्भूतो

---

१. Macdonell A. - A History of Sanskrit Literature, P.No.286

२. Hopkins - The Great Epic of India, P.No.57

३. Wilson H.H. - Introduction to Rigveda Samhita

४. महाभारतम् – श्रीनीलकण्ठभारतभावदीपिका, महाभारतस्योपक्रमणिका.

५. Winterniz, M. - History of India Literature, Vol.I, P.No.323

६. Vaidya C.V. - The Mahabharata - A Criticism.

वर्तमानविस्तृताकारमहाभारत– सम्बन्धिकर्तारमुल्लिखितवान्। अपि च दीक्षितमहोदयेनोक्तं यत् महाभारते नक्षत्रमण्डलस्य श्रवणनक्षत्रादारम्भो विश्वामित्रप्रवर्तित इत्युल्लेखात् क्री. पू.सार्धचतु:शताब्धा: पूर्वं महाभारतस्य रचना कथमपि न सम्भाव्यते।

छ. महाभारतस्य नीलकण्ठकृतभारतभावदीपटीकायाम् **एफ.ई.पार्जिटर्** (E. E. Pargiter) महोदयस्य मतमपि दत्तमस्ति, तद्यथा – एफ.ई.पार्जिटर्हेम–चन्द्ररायचतुर्धुरीणमहोदययो: तथा डि बर्नेट् महोदयस्य मतानुसारं क्री.पू. दशमशताब्द: रचनाकाल:।

ज. एतेषु मतान्तरेषु सत्स्वपि महाभारतग्रन्थलिखितसमयस्तु सुधीभिर्नोपेक्षणीय:। स च समय: द्वापरकलियुगयो: सन्धिकाल:। भारतीयज्यौतिष्का: (सूर्यसिद्धान्तकृन्मयासुरार्थभट्टादय:) कल्यब्दगणनां कृतवन्त:। भारतीयपञ्चाङ्गेषु कल्यब्दपरिमाणं निरूपितं वर्तते। अत्र वैमत्यं नास्ति।

झ. देहलीनगरस्थप्रत्नतत्त्वसन्धानालयाध्यक्षेण श्री **सुधीवरशशाङ्कभूषणराय** – महोदयेन तदीयगवेषणाफलं ग्रन्थाकारेण प्रकाशीकृतम्। तत्र च महाभारतयुद्धकालनिर्धारणं कृतम्। क्री. पू. १४२४ मिते वत्सरे एतद्विषयकं प्रमाणं तदीयं **प्राचीन भारत** नामक पुस्तकादवसेयम्।

**महाभारतस्य नामनिर्वचनानि**

महाभारतग्रन्थस्य परिचयावसरे प्रथमं तस्य नामकरणविषये परिशीलनं क्रियते।

सर्वेऽपि भारतीयविद्वांस: मन्यन्ते यत् महाभारतं प्राग् जयनाम्ना, ततो भारतनाम्ना, तदनन्तरं महाभारतमिति नाम्ना प्रसिद्धम्।

**नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।**

**देवी सरस्वतीं व्यासं ततो जयमुदीरयेत्।।**

महाभारतस्य प्रत्येकपर्वण: आदिम: श्लोकोऽयं महाभारतस्य जयशब्दव्यवहार्यतामाह। ''जय'' इति नामैव तस्य ग्रन्थस्य पाण्डवविजयमात्रबोधनाय निर्मितत्त्वमाह। इत्थं वयं रूढतया वक्तुं शक्नुमो यत् अमुमेव जयनामानं ग्रन्थं व्यास: स्वशिष्यं वैशम्पायनमध्यापयामासेति।

अत्र सूक्ष्मदृष्ट्या विचार्यते यत् जयशब्दस्य कोऽर्थ: ? यतो हि ''जय'' शब्दस्य अनेके अर्था: व्याकरणकोषादिभिर्वक्तुं शक्या:। परन्तु अन्य: एक: कश्चन रूढार्थ: स्यात्, ''जय'' शब्दस्येत्यनुमीयते। इत्थं हि विचार्यमाणे ज्योतिश्शास्त्रसिद्धान्तमनुसृत्य अष्टादशसंख्याबोधक: शब्द: ''जय'' इति ज्ञायते। तथाहि — क,ख,ग,घ,ङ,च,छ, ज,झ,ञ एतेषां व्यञ्जनानां क्रमेण १—२—३—४—५—६—७—८—९—० इति संज्ञा तथैव च, ट, ठ, ड, ढ, त, थ, द, ध, न एतेषामक्षराणामपि ता एव संज्ञा:। प,फ,ब,भ,म एतेषां पञ्चाक्षराणां १—२—३—४—५ एता: संज्ञा:, तथैव अन्त:स्थानामपि य—र—ल—व एतेषां चतुरक्षराणां १—२—३—४ एता: संज्ञा प्रोक्ता ज्योतिर्वित्तमै:। अनया रीत्या जकारोऽष्टमसंख्याबोधको यकारश्च प्रथमसंख्या बोधको भवति। तत: **संख्यानां वामतो गति:।** जयशब्दस्याष्टादश इति तावदर्थ: सिद्ध्यति। तानि प्रमाणानि यथा — ग्रन्थेऽस्मिन् पर्वाणि खल्वष्टादश। संग्रामश्चाप्यष्टादशदिनात्मकोऽभूत्। महाभारते सैन्यमप्यष्टादशाक्षौहिणीसंख्यम्। भगवद्गीताया: अध्याया: अष्टादशैव।

जयनाम्नि संस्करणेऽस्मिन् ८८०० श्लोका वर्तन्त इति बहूनां विमर्शकानामाशय:। यतो हि —

**अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च।**

**अहं वेद्मि शुको वेत्ति सञ्जयो वेत्ति वा न वा।।**[१]

इत्येषा प्रथमावस्था महाभारतस्य।

१. महा.आ.प.१.८१

वैशम्पायनः गुरोर्व्यासादधीते जये स्वचरितसंवादादि योजयित्वा नागयज्ञावसरे जनमेजयं श्रावयामास। तस्यामवस्थायां चतुर्विंशतिसहस्रश्लोकपरिमाणगतं भारतसंज्ञया प्रथमानञ्चेदं जातम्। तच्चोक्तम् –

**चतुर्विंशतिसाहस्री चक्रे भारतसंहिताम्।**

**उपाख्यानैर्विना तावद् भारतं प्रोच्यते बुधैः।।**[1] इति।

सेयं द्वितीयावस्था।

**परिपूर्णावस्था**

अस्यामवस्थायां शतसहस्रश्लोकविभूषितमिदं शतसाहस्री संहितेति, महत्त्वात्, भारवत्त्वाच्च महाभारतमिति नामभ्यां व्यवह्रियते। अस्या अवस्थाया उपबृंहणं लोमहर्षणपुत्रेण उग्रश्रवसा अकारि। जयभारताभिधयोरवस्थयोरपेक्षया महाभारताख्यायां नीति–धर्म–सदाचार–सम्पत्ति–राजनीत्यादीनां विषयाणां विस्तृतं विवेचनम्, वंशानुचरितम्, नानादेशानां विषयाणां दीर्घवर्णनं, कथायाः सम्बद्धानि विविधानि उपाख्यानानि चाधिक्येन संदृश्यन्ते। इदमेव महाभारतकलेवरवृद्धौ प्रमुखकारणम्।

भारतस्य वैशिष्ट्यद्योतनाय लोके किञ्चिदैतिह्यं प्रोच्यते। यथा कस्मिंश्चित् समये देवैस्तुलायामेकतः चत्वारः वेदाः धृताः, अपरतश्च भारतं धृतम्। तदानीं भारतं महत्त्वे गुरुत्वे च चतुर्भ्यो वेदेभ्योऽपि अधिकं जातम्। ततः प्रभृति लोके महाभारतम् इत्यन्वर्थनाम्ना अभिधीयते। तदुक्तम् –

---

१. महा.आ.प.१.६१

**एकतश्चतुरो वेदा भारतं चैतदेकतः।**
**पुरा किल सुरैस्सर्वैस्समेत्य तुलया धृतम्।।**
**चतुर्भ्यस्सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा।**
**तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते।।**
**महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम्।**
**महत्त्वाद् भारवत्त्वाच्च महाभारतमुच्यते।।**[1]

## महाभारतस्थोद्योगभीष्मपर्वणोः संक्षिप्तमितिवृत्तं महत्त्वञ्च

### उद्योगपर्व

त्रयोदशवर्षव्यापिप्रवासादनन्तरं द्रौपदीसहिताः पाण्डवाः प्रत्यावृत्त्य जातियुद्धमनिवार्यमिति ज्ञात्वा तदुद्योगाय मनो दधुः। विभिन्नराष्ट्रेषु दूतसम्प्रेषणं कृत्वा भाविनि युद्धे स्वपक्षसाहाय्यार्थमावेदनं कृतवन्तः। द्वारिकायां श्रीकृष्णेन सह साक्षात्काराय अर्जुनः प्रतस्थे। तद्वार्तां श्रुत्वा दुर्योधनोऽपि द्वारिकां जगाम। उभावेव कृष्णभवनं युगपत् प्रविविशतुः। निद्राणस्य कृष्णस्य शिरोदेशे महार्हमेकमासनं दृष्ट्वा दुर्योधनस्तत्रोपाविशत्। कृष्णस्य पदतलदेशस्थोऽवरासने विनीतभावेनार्जुनः स्थितः। निद्राभङ्गमात्रेण प्रथममर्जुनं दृष्ट्वा कृष्णः तेन सम्भाषणं चकार। ततो दुर्योधनः स्वस्योपस्थितिं ज्ञापयामास। युद्धार्थं साहाय्यं प्रार्थयेते उभावपि। दशकोटिपरिमिता नारायणी सेना दुर्योधनपक्षे कृष्णेन व्यवस्थापिता। स्वयं युद्धविमुखः सन् अर्जुनपक्षे रथसारथ्यमङ्गीचकार।

मा भूद् युद्धमिति विचार्य पञ्चग्राममात्रग्रहणेन पाण्डवास्तुष्येयुरिति, अवशिष्टं समग्रराज्यं कौरवा उपभुञ्जन्तु इति च पाण्डवपक्षात् सन्धिप्रस्तावः पुरोहितद्वारा

---

१. महा.आ.प.२१७–२७३

विज्ञापितो दुर्योधनेन प्रत्याख्यातः, सूच्यग्रपरिमितभूमिरपि न देया इति कथितञ्च। ततः श्रीकृष्णः स्वयं दौत्यं कर्तुं दुर्योधनसमीपं जगाम। दुर्योधनस्तु धृतराष्ट्रविदुरभीष्मादीनां वचनमवज्ञाय सन्धिविघटनं कृत्वा कृष्णस्य बन्धनमपि कर्त्तुमैच्छत्। श्रीकृष्णो विश्वरूपं प्रदर्श्य दुर्योधनं विमोह्य ततः प्रत्यावर्त्तत। अनन्तरञ्च सन्धिचेष्टायां विफलीभूतायां युद्धोद्यमः प्रतिपक्षं सोत्साहं प्रवर्तितः।

**भीष्मपर्व**

कुरुपाण्डवयोर्दूहरचना सम्पन्ना। एकतो भीष्मदेवः श्वेतोत्तरीयधारी कवचावृतो रथमारुरोह। अन्यतो गदाहस्तो भीमः स्वसैन्येनानुगम्यमानो रथारूढः बभूव। मध्ये स्थितोऽर्जुनः श्रीकृष्णचालितरथमारुह्य व्यराजत। श्रीकृष्णोऽर्जुनमुवाच – रथादवतीर्य शत्रुपराजयाय दुर्गास्तोत्रमुदीरयेति। अर्जुनेन तथा कृते सति भगवती दुर्गाऽन्तरिक्षे प्रत्यक्षमाविर्भूयोवाच – तव विजयो भविष्यतीति। ततो भगवत्यन्तर्दधे।

अथो दुर्योधनाज्ञया भीष्मादयः शङ्खान् दध्मुः। पाण्डवपक्षादपि शङ्खध्वनिरुत्थितः स च ध्वनिस्तुमुलोऽभवत्। भीष्मरक्षणाय दुर्योधनः सर्वान् सेनापतीन् सावधानान् व्यधत्त । अर्जुनवचनेन कृष्णः उभयोः कुरुपाण्डवसेनयोर्मध्ये रथं स्थापयामास। अर्जुनः परितः गुरुजनान्, भ्रातृन्, श्वशुरान्, सम्बन्धिनः, सुहृदश्च विलोक्य शुष्कमुखः कम्पमानशरीरो बभूव। हस्तात् गाण्डीवं स्खलितम् । दारुणात् स्वजनहननात् लोकक्षयकरात् समरात् स्वमरणं श्रेय इति विचिन्त्य धनञ्जयो रथमध्ये उपाविशत्।

श्रीकृष्णस्तस्य हृदयदौर्बल्यापनयनाय बहुधोपदिदेश। देहस्यानित्यतां, नित्यतां चात्मनः देहनाशेऽपि आत्मसत्ता स्थास्यत्येवेति तथा क्षत्रियस्य रणकर्मणो धर्मत्वं, रणकर्माकरणे निन्द्यत्वं, भीरुत्वापवादः, युद्धतः क्षत्रियस्य मरणं स्वर्गजनकमित्यादिकर्मवादानुपदिदेश। ततो भक्तिवादं ज्ञानवादञ्च अध्यायषट्कत्रयेणोपदिशन् विश्वरूपप्रदर्शनेन च स्वकीयमैश्वर्यं प्रादीदृशत्। पुनः आत्मनः स्वरूपं प्रकृतेः विकारांश्च ज्ञात्वा शास्त्रप्रमाणनिष्ठ्या अभिमानवजनेन,

निर्भरत्वमवलम्ब्य स्थिरस्य धर्मलाभः, धर्मजन्यो जयः इत्यादिसन्दर्भेण संशयं निरस्यार्जुनस्य मोहापनोदनं चकार। ततः समरारम्भकाले युधिष्ठिरो योद्धवेशपरित्यागं सर्वास्त्रपरिहारं च कृत्वा पक्षद्वयसेनापङ्क्तिमध्यपथमनुसृत्य कृताञ्जलिपरः पादचारेण गत्वा भीष्मद्रोणकृपशल्यानां पादवन्दनं विधाय तेषामाशिषो गृहीत्वा भ्रातृभिः सह मिलित्वा स्वरथमारुरोह।

अनन्तरमष्टादश दिनानि यावत् युद्धं प्राचलत्।

**प्रवृत्तिनिमित्तम्**

**महाभारतस्थोद्योगभीष्मपर्वणोःतद्धितान्तप्रयोगानुशीलनमिति विषये प्रवृत्ति** निमित्तमिदं यत् पाणिनीयव्याकरणे शब्दसाधुत्वज्ञानाय अष्टाध्यायीस्थाः तृतीय—चतुर्थ—पञ्चमाध्यायाः अतीव प्रधानभूताः। प्रकृतिसामान्यात् प्रकृतिविशेषात् च प्रत्ययाः तत्रैव विहिताः, तेषामर्थाश्च तत्रैव प्रायशः निर्दिष्टाः। अन्ये अध्यायास्तु प्रायशः प्रकृतिप्रत्यय योजनकाले जायमानानां कार्यविशेषाणां बोधकाः एव । अत एव तृतीय—चतुर्थ—पञ्चमाध्यायानां प्राधान्यमस्ति इति लेखकस्य अभिप्रायः। अत एव सर्वामिष्टाध्यायीं पूर्वार्द्ध—उत्तरार्द्धरूपेण विभज्य व्याख्यातवता भट्टोजिदीक्षितेन अपि उत्तरार्द्धारम्भे —

**पूर्वार्धे कथिताः तुर्य—पञ्चमाध्यायवर्तिनः।**
**प्रत्ययाः अथ कथ्यन्ते तृतीयाध्यायगोचराः।।**

इत्युक्त्वा तदध्यायविषयाणां प्राधान्यं सूचितम्।

तेष्वपि प्रत्ययेषु तद्धिताधिकारोक्ताः प्रत्ययाः प्रत्ययान्तरापेक्षया अधिक—संख्याकाः, तद्विधायकसूत्र—वार्तिकादीन्यपि अधिकानि। तत्र ज्ञातव्याः अंशाः बहवः सन्ति। अपि च अल्पेन पदेन अनल्पार्थबोधनाशक्तिः संस्कृतभाषायाः अस्ति। सा च कृत्—तद्धित—समास—एकशेष—सनाद्यन्तवृत्तिस्थितिबलात् प्राप्ता। तादृशस्तद्धि—तान्तशब्दाः महाभारते बहुत्र सन्ति। पदे—पदे अपत्यादितद्धितान्तशब्दाः महाभारते

दृश्यन्ते। यथा – **अर्जुनस्य अपत्यम् आर्जुनि**: इत्यादि। अत्र **आर्जुनिः** इति लघुना पदेन अभिमन्योः ग्रहणं कर्तुं शक्यते। विस्तरः अपेक्षते चेत् विग्रहवाक्येनापि बोधयितुं शक्यते।

यद्यपि बहुभिः महाभारतभाष्यकर्तृभिः कृतैः भाष्यैः महाभारतस्थोद्योग–भीष्मपर्वणोः तद्धितान्तशब्दानां विषये ज्ञातुं शक्नुमः, तथापि तत्र तत्र विक्षिप्तानामंशानामेकत्र कयाचित् रीत्या योजने अध्येतृणाम् अनायासेन तस्य ज्ञानं भवतीति लेखकेन अत्र प्रयत्नः विहितः। निर्माणवैचित्र्यं विषयवैविध्यं च अवश्यम् अध्येतारः अनुभविष्यन्ति इति धिया लेखकेन अपि प्रस्तुतविषये कश्चित् प्रयत्नः कृतः इति सविनयं विनिवेदयामि।

**विशेषः**

प्रत्येकप्रकाशस्य प्रत्येकस्मिन् महाभारते श्लोकाः न्यूनाधिकरूपेण मिलन्ति। प्रत्येक पर्वणः प्रत्येकाध्याये श्लोकाः न्यूनाधिकरूपेण सन्ति। तदर्थं लेखकेन लेखनकार्यार्थं स्वाध्यायमण्डलप्रकाशकस्य महाभारतं स्वीकृतम्। डॉ. पं. श्रीपाद दामोदर सातवलेकरः अस्य प्रधानसम्पादकः वर्तते। अस्मिन् ग्रन्थे उद्योगपर्वणि सप्तनवत्यधिक एकशतमध्यायाः सन्ति तथा च ६०६३ श्लोकाः सन्ति । भीष्मपर्वणि सप्तदशाधिकैकतशतमध्यायाः तथा च ५४१० श्लोकाः वर्तन्ते ।

लेखनकार्ये प्रत्येकस्य तद्धितान्तशब्दस्य श्लोकसन्दर्भः वर्तते। तत्र प्रथमं ५ इत्युक्ते उद्योगपर्व, ६ इत्युक्ते भीष्मपर्व, अनन्तरं श्लोकस्य अध्यायसंख्या, तदनन्तरं श्लोकसंख्या, अन्तिमे च a इत्युक्ते श्लोकस्य प्रथमपंक्तिः, b इत्युक्ते श्लोकस्य द्वितीयपंक्तिः, c इत्युक्ते श्लोकस्य तृतीयपंक्तिः ग्राह्या ।एवं रूपेण व्यवस्था वर्तते।



# द्वितीयोऽध्याय:

# तद्धिताध्ययनम्

**अष्टाध्याय्यां त्रयो भागा:**

प्रकृतिप्रत्ययविभागपूर्वकं पदान्वाख्यानाय पाणिनिना अष्टाध्याय्यां का प्रणाली आश्रिता ? इति किञ्चित् विचार्यते। आदिमाध्यायद्वयं पदसङ्कलनात्मकम्, तत: अध्यायत्रयं पदविश्लेषणात्मकम्, तत: अध्यायत्रयं पदसंयोजनात्मकमित्येवं भागत्रयमष्टाध्याय्यामस्तीति स्थूलदृशा वक्तुं शक्यते। तथा हि –

१. प्रथमभागे **सुप्तिङ्गन्तं पदम्**[१] इति पदसंज्ञां वदता सूत्रकारेण वाक्यात् प्रथमत: सुप्तिङन्तरूपाणि पदानि पृथक् विभज्य प्रदर्शितानि। **अर्थवदधातुरप्रत्यय: प्रातिपदिकम्**[२], **कृत्तद्धितसमासाश्च**[३], **भूवादयो धातव:**[४] इत्येवं सुप्तिप्रत्ययानां प्रकृति: सामान्याकारेण प्रदर्शिता।

२. तृतीय–चतुर्थ–पञ्चमाध्यायात्मके द्वितीयभागे प्रथम भाग प्रदर्शित: पदानां प्रकृतिप्रत्ययविभाग: प्रदर्शित:। तृतीयाध्याये प्रथमं धातुत्वसम्पादका: धातुप्रकृतिका: सुबन्तप्रातिपदिकप्रकृतिकाश्च सन्–क्यजादय:, तत: धातुप्रकृतिका: स्य–तासिप्रभृतय: विकरणप्रत्ययाश्च प्रदर्शिता:। तत: कृत्यसंज्ञका: तव्यदादय: प्रत्यया: प्रदर्शिता:।

एवं चतुर्थपञ्चमाध्याययो: ङ्याप्प्रातिपदिकं प्रकृतित्वेन निर्दिश्य ताभ्य: सुप्प्रत्यया: विहिता:। प्रातिपदिकात् टाबादय: स्त्रीप्रत्यया:, ङ्याबन्तात् प्रातिपदिकाच्च अणादय: अपत्या।

---

१. अष्टा.१.४.१४ २. अष्टा.१.१.४५ ३. अष्टा.१.२.४६ ४. अष्टा.१.३.१

## प्रत्ययेषु तद्धितानां प्राधान्यम्

प्रधानभूतेऽत्र भागे प्रत्ययान्तरापेक्षया तद्धितसंज्ञकप्रत्ययानां वैलक्षण्यं प्रामुख्यं चास्ति। एषामर्था अपि व्यापका: यथा –

१. तद्धितप्रत्ययविधायकानि सूत्राणि प्रत्ययान्तरविधायकसूत्राणामपेक्षया अधिकसंख्याकानि।

२. तद्धितप्रत्यया: प्रत्ययान्तरापेक्षया अधिकसंख्यका:।

३. तद्धितप्रकृति: क्वचित् सुबन्तम् भवति। यथा – 'आमुष्यायण:' इत्यादौ **नडादिभ्य: फक्**[१] इत्यादिभि: सुबन्तरूपप्रकृते: प्रत्ययोत्पत्ति:। क्वचित् प्रातिपदिकं प्रकृति:। यथा 'वायव्यम्' इत्यादौ **वाय्वृतुपित्रुषसो यत्**[२] इत्यादिभि: वायु इति प्रातिपदिकात् प्रत्ययोत्पत्ति:। क्वचित्तिङन्तं प्रकृति:। यथा – पचतितमाम्, पचतिरूपम्, पचतिदेश्यम् इत्यादौ **तिङश्च**[३] इत्यादिभि: तिङन्तरूपप्रकृते: प्रत्यय:। क्वचित् समासान्तं प्रकृति:। यथा – 'शैष्योपाध्यायिका, काकोलूकिका, कुत्सकुशिकिका' इत्यादौ **द्वन्द्वमनोज्ञादिभ्यश्च**[४], **द्वन्द्वाद्वुन्वैरमैथुनिकयो:**[५] इत्यादिभि: समासरूपप्रकृते: प्रत्यय:। क्वचित् कृदन्तं प्रकृति:। यथा – कृत्रिमम्, व्यावक्रोशी, सांराविणम् इत्यादौ **क्त्रेर्मम्नित्यम्**[६], **णच: स्त्रियामञ्**[७], **अणिनुण:**[८] इत्यादिसूत्रै: कृदन्तरूपप्रकृते: प्रत्यय:। क्वचित् स्त्रीप्रत्ययान्तं प्रकृति:। यथा – वैनतेय:, श्यैनेय: इत्यादौ **स्त्रीभ्यो ढक्**[९] इत्यादिभि: स्त्रीप्रत्ययान्तरूपप्रकृते: प्रत्यय:। क्वचित् अव्ययरूपप्रकृते: प्रत्यय:। यथा – 'इहत्य:' इत्यादौ **अव्ययात्त्यप्**[१०] इत्यादिभि: अव्ययरूपप्रकृतेश्च तद्धितप्रत्यया: अर्थविशेषे विहिता: दृश्यन्ते।

---

१. अष्टा.५.१.१४ २. अष्टा.४.२.३० ३. अष्टा.५.३.५६ ४. अष्टा.५.१.१३२
५. अष्टा.४.३.१२५ ६. अष्टा.४.४.२० ७. अष्टा.५.४.१४
८. अष्टा.५.४.१५ ९. अष्टा.४.१.१२० १०. अष्टा.४.२.१०३

४.   अन्ये प्रत्यया: प्राय: प्रकृते: परा: भवन्ति **प्रत्यय:**[१]**, परश्च**[२] इति कथनात्। ''श्नम्'' प्रत्यय एव तं नियमम् अतिक्रामति; **मिदचोऽन्त्यात्पर:**[३] इत्यस्यापवादनियमत्वात्। किन्तु तद्धितप्रत्यय: यथा प्रकृते: परो भवति तथा पूर्वभाव्यपि भवति । यथा "बहुतृणम्'' इत्यादी ''बहुच्'' प्रत्यय:। **विभाषा सुपो बहुच पुरस्यात्**[४] इति सूत्रेण तस्य पूर्वभावित्वं सूत्रं स्वयं निर्दिशति। अकच्प्रत्यय: टे: प्रागपि भवति, **अव्ययसर्वनाम्नामकच्प्राक्टे:**[५] इति कथनात्।

तद्धितशब्दे तच्छब्देन पूर्वसम्पादितसमासादिप्रकृति: गृह्यते। तेन ग्रहणसम्भवाभिप्रायेणैव सारस्वतव्याकरणे तद्धितप्रकरणप्रारम्भे चन्द्रकीर्तिव्याख्याने **तेषां पूर्वोक्तानां नामादीनाम् अर्थान्तरप्रकाशेन हित: तद्धित:** इत्युक्तम् । तत्रैव प्रसादव्याख्याने – **तेभ्य: पूर्वोक्तेभ्य: नामपदेभ्य: अर्थान्तरप्रतिपादन–शक्तिपदत्वेन हित: = अनुकूल: तद्धित: इति अन्वर्थसंज्ञाविज्ञानात् तद्धितसंज्ञा अणादीणाम्.....**[६] इत्युक्तम्।

केचित्तु – **तेभ्य: = छात्रेभ्य: हित: सुकरत्वात् नानापदव्युत्पाद–कत्वाच्च तद्धित:** इति व्युत्पत्तिं कृतवन्त:। वस्तुतस्तु तद्धितसंज्ञा टिघुभादिसंज्ञावत् पाणिनिना न अपूर्वतया सृष्टा, किन्तु प्राचीनाचार्यकृताया: तत्संज्ञाया: प्रसिद्धिवशात् प्राचीनाचार्येषु गौरववशाद्वा प्राचीनाचार्यकृता ''तद्धित:'' इति संज्ञा पाणिनिना यथातथं स्वीकृता।

**पाणिनीयानुसारि तद्धितलक्षणम्**

**तद्धिता:**[७] इत्यधिकारे **यूनस्ति:**[८] इत्यारभ्य **शेषाद्विभाषा**[९] इत्येतत्पर्यन्तं विद्यमानै: सूत्रै:, तत्रस्थवार्तिकैर्वा ये प्रत्यया: विहिता:, ते तद्धितसंज्ञका:।

---

१. अष्टा.३.१.१   २. अष्टा.३.१.२   ३. अष्टा.१.१.४६
४. अष्टा.   ५. अष्टा.५.३.७१   ६. सा.व्या.पृ.२७२
७. अष्टा.४.१.७६   ८. अष्टा.४.१.७७   ९. अष्टा.५.४.१५४

''तद्धिता:'' इत्यधिकारसूत्रं स्वोत्तरसूत्रेषु "यूनस्ति:" इत्यादिषु प्रतिसूत्रं गत्वा ''युवन्'' शब्दात् स्त्रीत्वे द्योत्ये ''ति'' प्रत्यय: भवति, स च तद्धितसंज्ञक: इत्यादिरूपेण अर्थं बोधयति । एवं ''तद्धिता:'' इत्यस्य संज्ञाधिकारत्वेन तदधिकारस्थानां ''ति'' प्रभृतीनां तद्धितसंज्ञासिद्ध्या तदधिकारविहितस्य प्रत्ययत्वम् इति सङ्केतसम्बन्धेन तद्धितपदवत्त्वम् इति पाणिनीयानुसारेण तद्धितप्रत्ययलक्षणमूहनीयं भवति।

यदि **नाम (प्रातिपदिक) प्रकृतिकप्रत्यय: तद्धित:** इति तद्धितलक्षणं क्रियते तदा – राम + स् = राम:, अज + आ = अजा, कृष्ण + क्विप्. ति = कृष्णाति इत्यादौ प्रातिपदिकप्रकृतिके सुपि, स्त्रीप्रत्यये, क्विपि अ + कार = अकार:, र + इफ = रेफ, मत्वर्थ. छ (ईय) = मत्वर्थीय: इत्यादौ प्रातिपदिकप्रकृतिके कृत्प्रत्यये च तद्धितलक्षणस्य अतिव्याप्ति: स्यात्। अमुष्य अपत्यम् = आमुष्यायण:, मा शब्द: इत्याह = माशाब्दिक:, पचतितराम्, पचतिरूपम्, पचतिदेश्यम् इत्यादौ सुप्तिङन्तप्रकृतिके तद्धिते अव्याप्तिश्च स्यात्।

## सिद्धान्तकौमुद्यां तद्धितव्यवस्था

सिद्धान्तकौमुद्यां तद्धिताधिकारे अवान्तराधिकारमाश्रित्य अर्थसामान्याश्रितानि सप्तदशप्रकरणानि विभक्तानि सन्ति। प्रत्येकं चार्थविशेषा ये निर्दिष्टास्तेषां विभागसंज्ञा भूयिष्ठा सम्भाव्यते।

**तस्यापत्यम्[१], तेन रक्तं रागात्[२], नक्षत्रेण युक्त: काल:[३], दृष्टं साम[४], परिवृतो रथ:[५], तत्रोद्धृतममत्रेभ्य:[६], स्थण्डिलाच्छयितरि व्रते[७], संस्कृतं भक्षा:[८], सास्मिन् पौर्णमासीति[९], सास्य देवता[१०], तस्य समूह:[११],**

१. अष्टा.४.१.९२ २. अष्टा.४.२.१ ३. अष्टा.४.२.३ ४. अष्टा.४.४.७
५. अष्टा.४.२.९ ६. अष्टा.४.२.१३ ७. अष्टा.४.२.१४ ८. अष्टा.४.२.१५
९. अष्टा.४.२.२० १०. अष्टा.४.२.२३ ११. अष्टा.४.२.३६

**संग्रामे प्रयोजनयोद्धुभ्यः**[1]**, तदस्यां प्रहरणमिति क्रीडायां णः**[2]**, तदधीते तद्वेद**[3] इत्येतेष्वर्थेषु प्रत्ययाः भवन्ति। अस्मिन् ग्रन्थे तद्धितविषयकज्ञानार्थं डॉ. आञ्जनेयलुमहाभागस्य''पाणिनीयद्धिताध्ययनम्'' इति ग्रन्थस्य सहाय्यमाचरितम् ।

**तद्धितप्रयोगे ऱ्हासहेतुः**

तद्धितान्तप्रयोगाः दिनानुदिनं क्षीणाः सञ्जाताः। एतां दुर्दशां दृष्ट्वा व्याकुलाः प्रयोगमर्मज्ञाः दुःखेन वदन्ति – **गतास्तद्धितान्ता मृताः प्रक्रियाजाः हताः सन्धिबन्धाः लुङश्च प्रयोगाः।** इदानीन्तनानां जनानां प्रवृत्तिः कृदन्ते, सुबन्ते, कदाचित्तिङन्ते च दृश्यते। शिवमहिम्नस्तोत्रे तद्धितान्तशब्दाः बाहुल्येन प्रयुक्ताः सन्ति । तद्धितान्तप्रयोगे ऱ्हास अस्ति चेदपि वैयाकरणः, शाब्दिकः, नैयायिकः, मीमांसकः, शिक्षकः इत्यादि शब्दाः भाषातः बहिष्कर्तुं न शक्याः। कौन्तेयः, पार्थः, वासुदेवः, पाणिनिः, राघवः, वासिष्ठः, आञ्जनेयादि शब्दास्तद्धितज्ञानां मनसि भारतीयशब्दसंस्कृतिम् इतिहासयन्ति।

अनिवार्यताऽपि ध्वनिता। ज्ञानं विधेरिव निषेधस्यापि कृते आवश्यकम्। तद्धितान्तप्रयोगः कथं निषिध्यते इति चेदुच्यते – अपत्याद्यर्थप्रयुक्तस्य तद्धितान्तशब्दस्य महानेक इतिहासो भवति। व्यक्तिवाचकसंज्ञापन्ने शब्दे स इतिहासः स्थातुं न शक्नोति। किञ्च नामधेयस्य भागद्वयं भवति। प्रथमे नाम्नि विशेषाक्षरनिवेशः, द्वितीये च गोत्राक्षरनिवेशः क्रियते। गोत्रावगतये गृहीतं पदं तद्धितान्तपरकमेव भवति। यदि नामकरणमपि तादृशमेव स्यात्, विरोधाभास आपद्येत। यथा गार्ग्यायणः, कौशिकः इत्यादौ । यथा कौशिको न गार्ग्यायणः, यदि गार्ग्यायणो न कौशिक इति, इत्थं प्रथमस्य रूढत्वे स्वीकृते तद्धितव्युत्पत्तिव्यर्था स्यात्। कृदन्तमादाय नामकरणे देवदत्त इत्यादौ देवप्रसादप्राप्तत्वमपि गम्यते, न च स

१. अष्टा.४.२.५५ २. अष्टा.४.२.५६ ३. अष्टा.४.२.५८

विरोध आपतति। पाणिनिः, वासुदेवः इत्यादितद्धितपरकं नाम वंशपरम्परादिसूचकमेव। मूलं नाम तु पाणिनेः किमप्यन्यदेव। यथा वासुदेवस्य भगवतः श्रीकृष्णः इति। तद्धितनिष्पन्ननामानि प्रायः एवं विधान्येव। **आद्यक्षरमवृद्धं भवेन्नाम्न** इत्यपि तत्र सूचितमस्ति। तद्धितप्रत्यये कृते तु प्रायेण आदिवृद्धिर्जायते, अतोऽस्य निषेधः सम्भाव्यते।

भोजस्य काले तद्धितप्रयोगप्रोत्साहनाय दत्तस्य पुरस्कारादेवर्णनं भोजप्रबन्धे प्राप्यते। कदाचिद्राजा मृगयारसपराधीनो हयमारुह्य प्रतस्थे –

**ततो नदीं समुत्तीर्णं शिरस्यारोपितेन्धनम्।**

**वेषेण ब्राह्मणं ज्ञात्वा राजा प्रपच्छ सत्वरम्।।**

''कियन्मानं जलं विप्र'

स आह – ''जानुदघ्नं नराधिप।''

अत्र मात्रच्प्रत्ययस्य प्रसिद्धस्य प्रयोगं श्रुत्वा उत्तरवाक्ये साधारणो जनस्तमेव प्रत्ययं प्रयुञ्जीत, किन्तु **दघ्नचः** प्रयोगेण तस्य महावैयाकरणत्वमनुमीय तेन लक्षं मुद्राणां दत्वा स समादृतः । यथा –

**लक्षं लक्षं पुनर्लक्षं मत्ताश्च दश दन्तिनः।**<br>**दत्ता भोजेन तुष्टेन जानुदघ्नप्रभाषणात्।।**

एतेन ज्ञायते यत् तत्कालेऽपि तद्धितप्रयोक्तारोऽल्पीयांसोऽभवन्निति।

छात्रशब्दस्य स्त्रीलिङ्गेऽध्येत्र्यामर्थे छात्रा छात्री वा प्रयोग विमर्शविषयतया चिन्त्यते। व्याकरणानुसारं छात्र इति प्रयोगो यथार्थः । परन्तु प्रायः स एकतकार एव प्रयुज्यते। प्राचीनस्मृत्यादिषु छात्री छात्रा वा प्रयोगो नाधिगम्यते। **छत्रादिभ्यो णः** इति सूत्रेण गुरोर्दोषावरणं छत्रम्, तच्छीलमस्येत्यर्थे छत्रशब्दात् णप्रत्यये छात्रशब्दो निष्पाद्यते। पाणिनीयतन्त्रे **ताच्छीलके णेऽण्कृतानि भवन्ति**[3] इति परिभाषया

अण्प्रयुक्ते स्त्रीलिङ्गे ङीप्प्रत्यये छात्री इत्येव रूपं स्यात्, न तु छात्रा इति। किन्तूक्तपरिभाषा **ज्ञापकसिद्धा इति ज्ञापकसिद्धं न सर्वत्र** इति परिभाषया **ताच्छीलके णेऽण्कृतानि भवन्ति** इति परिभाषां प्रबाध्य छात्रा इति कथं न स्यात् इति विषये बहुविचारः शास्त्रेषु लभ्यते।

एवमेव राष्ट्रिय–राष्ट्रीयशब्दयोः साधुताविषयेऽस्ति विवादः। **राष्ट्रावारपाराद् घखौ**[४] इति सूत्रेण घप्रत्यये ह्रस्वमध्यमरूपम्, **वृद्धाच्छ**[५] इति छप्रवृत्त्या दीर्घमध्यमरूपं सिद्ध्यति। मनुस्मृतौ तु राष्ट्रिकशब्दस्यापि प्रयोगो लभ्यते।[६] वस्तुतो राष्ट्रावारपाराद् घखौ इति सूत्रप्रवृत्तिस्तद्धितस्य सर्वेषु प्रकरणेषु, सर्वेषु चार्थेषु न भवति। निश्चितम् अवधिं यावत् तत्प्रवृत्ति अनन्तरं नाधिक्रियते। एतस्मादधिकारात् बहिर्भूतेष्वर्थेषु तत्स्थानीयाः ठक्छादयः प्रत्यया एव भवन्ति। **राष्ट्रावारपाराद् घखौ** इति सूत्रस्य शेषाधिकारपठितत्वात् शैषिकप्रकरणपर्यन्तमेव प्रयोजनम्, नातः परमपि। अतो राष्ट्रे जातः, राष्ट्रे भवः, राष्ट्रादागतः इत्यादिष्वर्थेषु राष्ट्रिय इति रूपमेव साधु, किन्तु **अवयवे च प्राण्योषधिवृक्षेभ्यः**[१] इति सूत्रात्परं घप्रत्ययस्य प्रवृत्तिर्न भवतीति काशिकावचनेन विज्ञायते। तथाहि – ''तस्य प्रकरणे तस्येति पुनर्वचनं शैषिकनिवृत्त्यर्थम्, विकारावयवयोर्घादयो न भवन्ति'' इति । अतः शैषिकाधिकाराद् बहिर्भूतार्थेषु यथा ठक्प्रत्ययेन **राष्ट्रिका** इति रूपं जायते, तथा छप्रत्ययेन राष्ट्रीयशब्दोऽपि पाणिनितन्त्रेण कथं न सिद्ध्यति। उदाहरणार्थमित्थं वक्तुं शक्यते यद् राष्ट्राय हितमित्यर्थे **तस्मै हितम्**[२] इति सूत्रेण छप्रत्यये राष्ट्रीय इति रूपमेव सेत्स्यति। हितार्थे कदापि छप्रत्ययो न स्यात्, हितार्थस्य शैषिकप्रकरणेऽयोगात्।

एवं विचारिते सति सिद्ध्यति यत् तद्धितविषये बहवो विसंवादास्तत्प्र–योगह्रासहेतुत्वेन निर्देष्टुं शक्याः। इत्थं विज्ञायते यत् व्याकरणसिद्धस्यापि पदस्य लोके अर्थानिर्णयात् प्रयोगह्रासः सञ्जातः। अस्माद्धेतोरिदानीं तद्धिताः शनैः शनैः प्रयोक्तृणामनभ्यासाद् विस्मृताः सन्तः क्षीणतां प्राप्ताः।

केचन तद्धितप्रत्ययाः अधुनातनमहाकाव्येषु वाग्व्यवहारे च प्रायः नैव प्रयुज्यमानाः दृश्यन्ते, पूर्वं प्रयुक्ताः स्युर्नाद्यत्वे। तद्यथा – **देये त्रा च**[३], **देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहलम्**[४] इत्याभ्यां सूत्राभ्यां त्राप्रत्ययः विधीयते। विप्राधीनं देयं करोतीत्यर्थे **विप्रत्रा सम्पद्यते** इति रूपम्। यद्वा देवं देवे वेत्यर्थे **देवत्रा वन्दे रमे वेति** प्रयोगो व्याकरणसम्मतोऽपि नावलोक्यते। वृत्तिकारेण सूत्रे बहुलवचनादुक्तेभ्योऽन्यत्रापि "त्रा'' स्यादित्युक्तम् । तदनुसार विद्यापीठं मन्दिरं वा गच्छतीत्यर्थे विद्यापीठत्रा मन्दिरत्रा गच्छतीति प्रयोगो न क्वाप्यवलोक्यते, न वा **रामे रमते** इत्यर्थे **रामत्रा रमते** इति प्रयुज्यते। एवमेव डाच्प्रत्ययान्तं, प्रकारवचने जातीयप्रत्ययान्तं, प्रशंसार्थे रूपप्प्रत्ययान्तं, प्रकृतेः प्राग्विधीयमानं बहुच्प्रत्ययान्तं, विहितं रूप्यप्रत्ययान्तं पदमधुना क्वापि न दृश्यते प्रयुक्तम्। तदित्थमनेकहेतु– भिस्तद्धितप्रयोगेह्रास आगत इति गम्यते।

# तृतीयोऽध्यायः

## महाभारतस्थोद्योगभीष्मपर्वणोः तद्धितान्तप्रयोगानुशीलनम्

अस्मिन्नध्याये उद्योगभीष्मपर्वणोः तद्धितान्तानां विचारः वर्तते। इत्युक्ते येषां तद्धितान्तानां प्रयोगः महाभारत एव वर्तते। अन्यत्र न। अन्यत्र इत्युक्ते लोके तेषां शब्दानां प्रयोगः न दृश्यते। यथा – **आर्जुनिः** – अभिमन्यु इत्यर्थः। अस्य शब्दस्य प्रयोगः महाभारत एव दृश्यते, कुत्रचित् महाकाव्येषु अपि। परन्तु लोके भाषणे अभिमन्युः इति कथनावसरे **आर्जुनिः** इति शब्दस्य प्रयोगं कोऽपि न करोति। तादृशाः तद्धितान्तशब्दा : यथा –

**१. भारद्वाजः**

**भीष्मस्य तु वचः श्रुत्वा भारद्वाजो महामनाः।**
**धृतराष्ट्रमुवाचेदं राजमध्येऽभिपूजयन्।।**[१]

भरद्वाजस्य गोत्रापत्यमिति विग्रहे गोत्रापत्येऽर्थे भरद्वाजशब्दात् **अनृष्यानन्तर्ये बिदादिभ्योऽञ्**[२] इति सूत्रेण भरद्वाजशब्दस्य बिदादिगणे पठितत्वात् अजि प्रत्यये भरद्वाज + अञ् इति स्थिते अनुबन्धलोपे भरद्वाज + अ इति जाते, **तद्धितेष्वचामादेः**[३] इत्यनेनाद्यचो वृद्धौ भारद्वाज + अ इति जाते **यचि भम्**[४] इति भसंज्ञायां **यस्येति च**[५] इत्यनेन अकारलोपे, **कृत्तद्धितसमासाश्च**[६] इति प्रातिपदिकसंज्ञायां भारद्वाज इति सिद्ध्यति। ततः ''भारद्वाज'' इति प्रातिपदिकात्

---

१. उ.प.४८.४२ २. अष्टा.४.१.१०४

३. अष्टा.४.३.१३३ ४. अष्टा.१.४.१८

५. अष्टा.६.४.१४८ ६. अष्टा.१.२.४६

प्रथमैकवचने सुप्रत्यये कृते **उपदेशोऽजनुनासिक इत्**[1] इति उकारस्य इत्संज्ञायां, **तस्य लोपः**[2] इति उकारस्य लोपे, सकारस्य **ससजुषो रुः**[3] इति रुत्वे **खरवसानयोर्विसर्जनीयः**[4] इति विसर्गे च **भारद्वाजः** इति रूपं सिद्ध्यति। द्रोणाचार्य इत्यर्थः।

ऋषिभेदः इति मेदिनी।

**भरद्वाजो गुरोः पुत्रः व्याघ्राटाख्यविहङ्गमे।**
**भारद्वाजी वनकार्पास्यां ना द्रोणऋषिभेदयोः।।**[5]

**श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.145.7.c | 5.164.14.b | 5.164.17.b | 5.196.5.b | 6.41.62.a |
| 6.47.12.a | 6.47.14.b | 6.49.8.a | 6.49.10.b | 6.49.12.b |
| 6.49.15.b | 6.49.19.b | 6.49.32.a | 6.49.37.b | 6.51.36.b |
| 6.53.7.b | 6.60.63.a | 6.60.66.b | 6.65.17.a | 6.65.22.a |
| 6.65.23.a | 6.69.14.b | 6.71.15.a | 6.71.30.a | 6.71.31.a |
| 6.73.48.b | 6.73.62.a | 6.77.24.a | 6.78.14.a | 6.78.19.a |
| 6.78.20.a | 6.78.22.a | 6.78.24.a | 6.83.7.a | 6.85.21.b |
| 6.90.8.b | 6.90.15.b | 6.90.25.a | 6.90.36.b | 6.97.53.b |
| 6.98.2.a | 6.98.3.b | 6.106.16.b | 6.107.47.b | 6.115.25.a |

**२. द्रौणिः**

**ततो द्रोणोऽब्रवीद्भीष्मः कृपो द्रौणिश्च भारतः।**
**मत्वा मां महतीं चिन्तामास्थितं व्यथितेन्द्रियम्।।**[6]

द्रोणस्यापत्यमिति विग्रहे द्रोणशब्दात् **अत इञ्**[7] इति सूत्रेण इञि प्रत्यये द्रोण + इञ् इति स्थिते अनुबन्धलोपे द्रोण + इ इति जाते, आद्यचो वृद्धौ सत्यां द्रौण

१. अष्टा.१.३.२ २. अष्टा.१.३.९ ३. अष्टा.८.२.६६
४. अष्टा.८.३.१५ ५. मे.को.३४,पृ.३२ ६. उ.प.५४.१७
७. अष्टा.४.१.९५

+इ इति स्थिते, भसंज्ञायां **यस्येति च**[१] इति सूत्रेणाकारलोपे कृते द्रौण + इ इति स्थित्यां प्रातिपदिकत्वात् प्रथमैकवचने सुप्रत्यये रुत्वे विसर्गे च **द्रौणिः** इति रूपं सिद्ध्यति। अश्वत्थामा इत्यर्थः।

श्रीमान् आप्टे महोदयः द्रौणायणिः इति फक्प्रत्ययान्तपदमपि अश्वत्थाम्नः विशेषण रूपेणाङ्गीकरोति।[२]

यथा वेणीसंहारे – **यद्रामेण कृतं तदेव कुरुते द्रौणायनिः क्रोधनः।**[३]

भीष्मपर्वणि यथा –

**गुरुं प्रव्यथितं दृष्ट्वा राजा दुर्योधनः स्वयम्।**
**द्रौणायनिश्च संक्रुद्धौ भीमसेनमभिद्रुतौ॥**[४]

**द्रौणायनिः** – द्रोणस्यापत्यमित्यर्थे **अत इञ्**[५] इति सूत्रेण प्राप्तमिञ्प्रत्ययं बाधित्वा शिवादेराकृतिगणत्वेन ततः **शिवादिभ्योऽण्**[६] इति अण् प्रत्यये, अनुबन्धलोपे, **आदिवृद्धौ, यस्येति च**[७] इत्यकारलोपे च द्रौण इति जाते ततः **अणो द्व्यचः**[८] इति सूत्रेण फिञ् प्रत्यये, अनुबन्धलोपे, आदिवृद्धौ, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्** इति सूत्रेण फस्य आयनादेशे द्रौणायनिः इति रूपं सिध्यति।

**श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.54.42.a | 5.54.47.b | 5.54.47.b | 5.54.54.b | 5.54.59.b |
| 5.56.50.a | 5.59.17.a | 5.64.5.a | 5.81.47.b | 5.139.41.b |
| 5.194.6.a | 5.194.19.b | 5.195.5.b | 6.43.43.a | 6.48.39.a |
| 6.51.4.b | 6.51.5.a | 6.51.7.a | 6.57.1.a | 6.57.8.a |
| 6.57.11.a | 6.61.12.c | 6.61.26.a | 6.69.3.a | 6.69.9.a |

१. अष्टा.१.४.१८ २. शि.आ.श.को.पृ.४८२ ३. वेणी.सं.३.३१
४. भी.प.६.९०.१९ ५. अष्टा.४.१.९५ ६. अष्टा.४.१.११२
७. अष्टा.६.४.१४८ ८. अष्टा.४.१.१५६

| | | | | |
|---|---|---|---|---|
| 6.69.10.a | 6.69.15.a | 6.72.18.b | 6.77.27.a | 6.78.25.a |
| 6.78.30.b | 6.78.32.a | 6.78.34.b | 6.82.49.a | 6.38.11.a |
| 6.90.27.b | 6.90.28.a | 6.90.30.b | 6.90.35.a | 6.90.38.a |
| 6.90.39.b | 6.91.13.a | 6.94.9.b | 6.96.15.a | 6.97.41.b |
| 6.97.42.b | 6.97.44.b | 6.97.48.b | 6.97.50.b | 6.97.51.a |
| 6.107.23.b | 6.112.9.a | | | |

### ३. द्वैपायनः

**इति द्वैपायनो व्यासो नारदश्च महातपाः।**
**जामदग्न्यश्च रामो नः कथामकथयत्पुरा॥**[१]

द्वीपस्य गोत्रापत्यमिति विग्रहे द्वीपशब्दात् **नडादिभ्य:फक्**[२] इति सूत्रेण द्वीपशब्दस्य नडादिगणे पठितत्वात् फक्प्रत्यये द्वीप + फक् इति स्थिते, अनुबन्धलोपे द्वीप + फ इति जाते, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[३] इत्यनेनायनादेशे द्वीप + आयन इति जाते, **किति च**[४] इत्यनेन कित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे द्वैप् + आयन इति जाते सवर्णदीर्घ ततः प्रातिपदिकत् वात्सु प्रत्यये रुत्वे विसर्गे च **द्वैपायनः** इति रूपं सिद्ध्यति। वेदव्यास इत्यर्थः।

### श्लोकसन्दर्भाः

5.65.8.b 6.17.1.a 6.65.4.b 6.117.9.b

### ४. पाण्डवः

**कथान्तमासाद्य च माधवेन**
**संघट्टिताःपाण्डवकार्यहेतोः।**
**ते राजसिंहाःसहिता ह्यशृण्वन्**
**वाक्यं महार्थं च महोदयं च ॥**[१]

---

१. उ.प.६०.४ २. अष्टा.४.१.९९
३. अष्टा.७.१.२ ४. अष्टा.७.२.११८

पाण्डोस्तदाख्यया प्रसिद्धस्य राज्ञोऽपत्यम् इति विग्रहे पाण्डुशब्दात् **तस्यापत्यम्**[2] इत्यनेनापत्यार्थे अण्प्रत्यये पाण्डु + अण् इति जाते, अनुबन्धलोपे पाण्डु + अ इति स्थिते णित्वसामर्थ्यात् आद्यचो वृद्धौ पाण्डु + अ इति जाते, **ओर्गुणः**[3] इत्यनेन उकारस्य गुणे कृते पाण्डो + अ इति जाते **एचोऽयवायावः**[4] इत्यनेनावादेशे च पाण्डव इति सिद्ध्यति। पुनः सौ, रुत्वे विसर्गे च पाण्डवः इतिरूपं सिद्धम्। पञ्चपाण्डवा इत्यर्थः। पदस्यास्य श्लोकसन्दर्भाः अधिकत्वात् महाभारते कुत्रापि द्रष्टुं शक्नुमः ।

**५. माद्रेयः**

**सहदेवस्तु माद्रेयः शूरः संक्रन्दनोयुधि।**
**स्वमंशं कल्पयामास श्यालं ते सुबलात्मजम् ।।**[5]

माद्रेः अपत्यं पुमानिति विग्रहे माद्रीशब्दात् **द्व्यचः**[6] इति सूत्रेण प्रातिपदिकस्य द्वयच्त्वात् स्त्रीप्रत्ययान्तत्वाच्च ढक्प्रत्यये माद्री + ढक् इति स्थिते अनुबन्धलोपे माद्री + ढ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[7] इत्यनेन ढस्य स्थाने एयादेशे माद्री + एय इति जाते भत्वेन ईकारलोपे कृते प्रातिपदिकत्वात् सुप्रत्यये, रुत्वे विसर्गे च माद्रेयः इति रूपं सिद्ध्यति। माद्रीनन्दनः सहदेव इत्यर्थः।

१. उ.प.१.९ २. अष्टा.४.१.९२ ३. अष्टा.६.४.१४
४. अष्टा.६.१.७५ ५. उ.प.५६.२२
६. अष्टा.४.१.१२१ ७. अष्टा.७.१.२

**६. वैराटिः**

**उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः।**
**शिखण्डी क्षत्रदेवश्च तथा वैराटिरुत्तरः ॥**[१]

विराटस्यापत्यमिति विग्रहे विराटशब्दात् **अत इञ्**[२] इति सूत्रेण षष्ठ्यन्ताददन्तात् प्रातिपदिकात् इञि प्रत्यये विराट + इञ् इति स्थिते अनुबन्धलोपे विराट + इ इति जाते **तद्धितेष्वचामादेः**[३] इत्यनेनाद्यचो वृद्धौ वैराट + इ इति जाते, **यचि भम्**[४] इत्यनेन अजादौ प्रत्यये परे पूर्वस्य भसंज्ञायां **यस्येति च**[५] इति अकारलोपे वैराटि इति जाते ततः प्राति पदिकत्वात् सौ, रुत्वे विसर्गे च **वैराटिः** इति सिद्धम्। विराट्कुमारः उत्तरः इत्यर्थः।

**श्लोकसन्दर्भा :**

5.167.1.b    6.43.74.a    6.45.35.a    6.45.43.a

**७. वार्ष्णेयः**

**ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवीपतिः।**
**गृहान् प्रत्यापयामास सगणं सहबन्धवम् ॥**[६]

वृष्णेरपत्यं पुमान् इति विग्रहे वृष्णिशब्दात् **इतश्चानिञः**[७] इत्यनेन इकारान्तात् द्यचोऽपत्ये ढकि प्रत्यये वृष्णि + ढक् इति जाते, अनुबन्धलोपे वृष्णि + ढ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[८] इति सूत्रेण एयादेशे कृते वृष्णि + एय इति जाते भत्वात् **यस्येति च**[९] इत्यनेनेकारलोपे कृते वृष्ण् + एय इति जाते किति च इति आद्यचो वृद्धौ सत्यां वार्ष्णेय इति जाते प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च वार्ष्णेयः इति रूपं सिद्ध्यति। श्रीकृष्णस्य नामविशेषः।

---

१. उ.प.५६.३२    २. अष्टा.४.१.९५    ३. अष्टा.७.२.११७
४. अष्टा.१.४.१८    ५. अष्टा.६.४.१४८    ६. उ.प.५.११
७. अष्टा.४.१.११२    ८. अष्टा.७.१.२    ९. अष्टा.६.४.१४८

**श्लोकसन्दर्भा :**

| | | | | |
|---|---|---|---|---|
| 5.7.8.a | 5.28.11.a | 5.76.15.b | 5.76.20.b | 5.78.8.a |
| 5.82.11.a | 5.84.21.b | 5.85.10.b | 5.87.15.b | 5.88.3.b |
| 5.88.27.c | 5.88 37. b | 5.88.67.a | 5.89.7.b | 5.89.11.a |
| 5.89.36.b | 5.122.5.a | 5.128.6.a | 5.135.7.a | 5.139.1.c |
| 5.139.15.b | 5.139.29.a | 5.139.54.b | 5.139.56.b | 5.141.6.b |
| 5.141.9.b | 5.142.29.b | 5.151.1.b | 5.155.12.b | 5.155.14.a |
| 5.155.36.b | 5.161.6.b | 6.23.41.b | 6.25.36.b | 6.46.12.a |
| 6.48.12.b | 6.48 13 a | 6.54.7.a | 6.55.62.a | 6.68.26.b |
| 6.70.25.b | 6.77.33.a | 6.78.39.b | 6.80.20.a | 6.80.44.a |
| 6.97.46.b | 6.97.54.b | 6.100.30.b | 6.100.31.a | 6.100.32.a |
| 6.100.33.a | 6.103.21.a | 6.103.46.b | 6.103.50.a | 6.115.25.a |
| 6.106.31.a | 6.107.14.a | 6.107.39.a | 6.108.31.b | 6.103.55.b |

**८. सात्यकि:**

**अस्त्रं द्रोणादर्जुनाद्वासुदेवात्कृपाद्भीष्मायेन कृतं शृणोमि।**
**यं तं कार्ष्णिप्रतिमं प्राहुरेकं स सात्यकिः पाण्डवार्थे निविष्ट : ।।**[१]

सत्यकस्यापत्यमिति विग्रहे सत्यकशब्दात् **अत इञ्**[२] इति षष्ठ्यन्तात् अदन्तात्प्रातिपदिकात् इञ्प्रत्यये कृते सत्यक + इञ् इति स्थिते अनुबन्धलोपे सत्यक + इ इति जाते भत्वेनाकारलोपे सत्यक् + इ इति जाते आद्यचो वृद्धौ सत्यां प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **सात्यकि:** इति रूपं सिद्ध्यति। वृष्णिवंशीयसत्यकपुत्र: इत्यर्थ: । स तु श्रीकृष्णस्य सारथि:।

**शैनेय:, शिनेर्नप्ता, युयुधान:** इति शब्दकल्पद्रुम:।[३]

---

१. उ.प.२२.२३ २. अष्टा.४.१.९५ ३. श.क.द्रु.भा.५, पृ.३२६

**श्लोकसन्दर्भा :**

| | | | | |
|---|---|---|---|---|
| 5.22.23.b | 5.52.4.a | 5.54.58.a | 5.92.17.a | 5.128.9.b |
| 5.139.42.a | 5.141.49.a | 5.149.62.a | 6.43.12.a | 6.50.111.a |
| 6.59.24.a | 6.65.9.a | 6.70.6.a | 6.78.47.a | 6.100.16.a |
| 6.100.27.a | 6.107.12.b | | | |

**९. आत्रेय :**

**अत्रैवोदाहरन्तीममितिहासं पुरातनम्।**
**आत्रेयस्य च संवाद साध्यानां चेति नः श्रुतम्।।**[१]

अत्रेरपत्यमिति विग्रहेऽपत्यार्थे अत्रिशब्दात् **ऋष्यन्धकवृष्णिकुरुभ्यश्च**[२] इति प्राप्तम् ऋष्यणं बाधित्वा **इतश्चानिञः**[३] इति सूत्रेणाकारान्तात् अनिञन्तात् ढकि प्रत्यये अत्रि + ढक् इति स्थिते, अनुबन्धलोपे अत्रि + ढ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[४] इति सूत्रेण ढकारस्य स्थाने एयादेशे कृते अत्रि + एय इति जाते भत्वेनेकारलोपे आद्यचो वृद्धौ सत्याम् आत्रेय इति जाते ततः प्रातिपदिकत्वात् सु, सोः रुत्वे विसर्गे च आत्रेयः इति रूपं सिद्ध्यति। आत्रेयः महर्षिविशेषः।

**चन्द्रमा** इति मेदिनी। यथा –

**आत्रेयी पुष्पवत्यां स्यान्नदीभेदे च ना मुनौ।**
**आदित्यो भास्करे देवेप्याम्नायो निगमेऽपि च ।।**[५]

---

१. उ.प. ३६.१ २. अष्टा.४.१.११४

३. अष्टा.४.१.१२२ ४. अष्टा.७.१.२

५. मे.को.श्लो.७४, पृ.११८

## १०. गावल्गणिः

**गावल्गणिः सञ्जयः सूतसूनुरजातशत्रुमवदत्प्रतीतः ।**
**दिष्ट्य राजस्त्वामरोगं प्रपश्ये सहायवन्तं च महेन्द्रकल्पम्।।**[१]

गवल्गणस्यापत्यमिति विग्रहे गवल्गणशब्दात् **अत इञ्**[२] इति सूत्रेण षष्ठ्यन्ताददन्तात्प्रातिपदिकात् इञ्प्रत्यये गवल्गण + इञ् इति स्थिते अनुबन्धलोपे गवल्गण + इ इति जाते, ञित्वादाद्यचो वृद्धौ कृतायां भत्वादकारलोपे च गावल्गणि इति जाते ततः प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **गावल्गणिः** इति रूपं सिद्ध्यति। अर्थात् गवल्गणनन्दनः सञ्जयः।

**श्लोकसन्दर्भा :**

5-23-3-a 5.49.10.a 6.20.12.b 6.14.1.a

## ११. सौमदत्तिः

**अर्हत्तमः कुरुषु सौमदत्तिः स नो भ्राता सञ्जय मत्सखा च।**
**महेष्वासो रथिनामुत्तमो यः सहामात्यः कुशलं तस्य पृच्छेः ।।**[३]

सोमदत्तस्यापत्यमिति विग्रहे सोमदत्तशब्दात् **अत इञ्**[४] इत्यनेन षष्ठ्यन्ताददन्तात् प्रातिपदिकात् इञि प्रत्यये कृते सोमदत्त + इञ् इति जाते अनुबन्धलोपे सोमदत्त + इ इति स्थिते **यचि भम्**[५] इत्यनेन भसंज्ञायां **यस्येति च**[६] इत्यनेनाकारलोपे सोमदत्त + इ इति जाते **तद्धितेष्वचामादेः**[७] इत्यनेन आद्यचो वृद्धौ सत्यां सौमदत्ति इति जाते ततः प्रातिपदिकत्वेन सप्रत्यये रुत्वे विसर्गे च **सौमदत्तिः** इति रूपं सिद्धम्। भूरिश्रवा इत्यर्थः।

---

१. उ.प.२३.३ २. अष्टा.४.१.९५ ३. उ.प.३०.२१
४. अष्टा.४.१.९५ ५. अष्टा.१.४.१८ ६. अष्टा.६.४.१४८
७. अष्टा.७.२.११७

**श्लोकसन्दर्भा :**

| | | | | |
|---|---|---|---|---|
| 5.31.11.b | 5.31.15.a | 5.40.28.b | 5.102.7.a | 5.109.3.b |
| 5.134.7.b | 5.140.16.b | 6.33.50.b | 6.33.51.a | 6.39.16.a |
| 6-61.44.b | 6.116.38.a | | | |

**१२. जामदग्न्य:**

**इति द्वैपायनो व्यास नारदश्च महातपा:।**
**जामदग्न्यश्च रामो न: कथामकथयत्पुरा ।।**[१]

जमदग्नेर्गोत्रापत्यमिति विग्रहे **गर्गादिभ्यो यञ्**[२] इत्यनेन सूत्रेण जमदग्निशब्दस्य गर्गादिगणे पठितत्वात् यञि प्रत्यये जमदग्नि + यञ् इति स्थिते अनुबन्धलोपे जमदग्नि + य इति जाते, ञित्वादाद्यचो वृद्धौ सत्यां जामदग्नि + य इति जाते, **यचि भम्**[३] इति यकारादौ प्रत्यये परे इकारस्य भसंज्ञायां कृतायां **यस्येति च**[४] इतीकारस्य लोपे जामदग्न्य इति जाते तत: प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **जामदग्न्य:** इति रूपं सिद्ध्यति ।जमदग्निनन्दन: परशुराम इत्यर्थ:।

यथा देवीभागवते – **पित्राज्ञया जामदग्न्येन पूर्वं छिन्नं शिरो मातु**[५] रिति प्रसिद्धम्।

**श्लोकसन्दर्भा:**

| | | | | |
|---|---|---|---|---|
| 5.81.65.a | 5.94.3.b | 5.95.1.a | 5.123.16.a | 15 .166.4.a |
| 5.174.22.a | 5.175.1.a | 5.175.11.a | 5.176.20. b | 5.176.31.a |
| 5.177.8.b | 5.178.4.a | 5.178.20.a | 5.179.238 | 5.179.24.b |
| 5.180.6.a | 5.180.28.b | 5.180.38.b | 5.181.5.b | 5.181.7.a |

१. उ.प.६०.४१ २. अष्टा.४.१.१०५

३. अष्टा.१.४.१८ ४. अष्टा.६.४.१४८

५. दे.भा.२५.४१

| | | | | |
|---|---|---|---|---|
| 5.181.9.a | 5.181.11a | 5.181.14.b | 5 -181-22-b | 5.182.5a |
| 5.182.10.a | 5.182.11.b | 5.184.5.a | 5.184.10a | 5.183.18. b |
| 5.184.3 | 5 .184.4.b | 5.184.14.b | 5.185.8a | 5.185.12a |
| 6.14.7.b | 6.15.20.a | 6.15.20.b | 5.186.9.a | 6.14.7.a |
| 6.15.45.b | 6.15.43.a | 6.62.27.a | 6.104.43.b | |

### **१३. मातङ्गः**

**इति मातङ्गवचनं परीप्सन्ति हितेप्सवः।**
**धर्माय चैव प्राणमेद्ब्राह्मणेभ्यश्च मद्विधः ।।**[१]

मतङ्गस्यापत्यमिति विग्रहे मतङ्गशब्दात् **तस्यापत्यम्**[२] इत्यनेन षष्ठ्यन्तात् समर्थादपत्यार्थे अणि प्रत्यये कृते मतङ्ग + अण् इति स्थिते अनुबन्धलोपे मतङ्ग + अ इति जाते णित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे मातङ्ग इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च मातङ्गः इति रूपं सिद्ध्यति ।मातङ्गनामक ऋषिविशेषः।

हस्ती इत्यमरः। **गजेऽपि नागमातङ्गावपाङ्गस्तिलकेऽपि च।**[३] **श्वपचः** इति मेदिनी।[४]

उद्योगभीष्मपर्वभ्यामन्यत्र सर्वेषु स्थलेषु मातङ्ग इति शब्दस्य हस्ती इत्यर्थः स्वीकृतः।

### **श्लोकसन्दर्भा :**

| | | | | |
|---|---|---|---|---|
| 5.30.33a | 5.132.39-a | 5.140.11.a | 56.3.42.b | 6.4.42.b |
| 6.17.35a | 6.50.76a | 6.55.10.b | 6.74.34.b | 6.84.7.a |
| 6.92.65.a | 6.102.58.a | 6.112.36.a | 6.112.134.c | |

---

१. उ.प.१२५.२०१ २. अष्टा.४.१.९२ ३. अ.को.३.३.२१ ४. मे.को.२५.४५

## १४. धौम्यः

**यावत्कृष्णावसंनद्धौ यावत्तिष्ठति गाण्डिवम्।**
**यावद्धौम्यो न सेनाग्रौ जुहोतीह द्विषद्बलम् ॥**[१]

धूमस्य गोत्रापत्यमिति विग्रहे धूमशब्दात् **गर्गादिभ्यो यञ्**[२] इत्यनेन धूमशब्दस्य गर्गादिगणे पठितत्वात् यञि प्रत्यये धूम + यञ् इति जाते, अनुबन्धलोपे धूम + य इति स्थिते जित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे धौम्य इति रूपम्। ततः सुप्रत्यये रुत्वे विसर्गे च धौम्यः इति रूपं सिद्धम्। धौम्यमुनिरित्यर्थः।

## १५. शैशुपालिः

**यश्चैवाप्रतिमो वीर्ये धृष्टकेतुर्महाशयाः।**
**दुःसहः समरे क्रुद्धः शैशुपालिर्महारथः।**
**तेन वश्चेदिराजेन पाण्डवा अभ्ययुञ्जत ॥**[३]

शिशुपालस्यापत्यमिति विग्रहे शिशुपालशब्दात् **अत इञ्**[४] इति सूत्रेण षष्ठ्यन्तादन्तात्प्रातिपदिकात् इञि प्रत्यये शिशुपाल + इञ् इति जाते, अनुबन्धलोपे शिशुपाल + इ इति स्थिते ञित्वादाद्यचो वृद्धौ भत्वेनाकारलोपे कृते शैशुपालि इति जाते ततः सौ रुत्वे विसर्गे च शैशपालिः इति रूपं सिद्धम्। धृष्टकेतुः इत्यर्थः।

## श्लोकसन्दर्भाः

5.124.7.b

## १५. वैरोचनिः

**वयमेव गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः।**
**प्रसहा पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा ॥**[५]

---

१. उ.प.१२४.२ २. अष्टा.४.१.१०५ ३. उ.प.४९.४१

४. अष्टा.४.१.९५ ५. [illegible]

विरोचनस्यापत्यमिति विग्रहे विरोचनशब्दात् **अत इञ्**[1] इति सूत्रेण षष्ठ्यन्ताददन्तात्प्रातिपदिकात् इञि प्रत्यये विरोचन + इञ् अनुबन्धलोपे विरोचन + इ इति जाते आद्यचौ वृद्धौ सत्यां भत्वेनाकारलोपे वैरोचनि इति जाते ततः सु, सौ रुत्वे विसर्गे च **वैरोचनिः** इति रूपं सिद्ध्यति। बलिः इत्यर्थः।।

**बुद्धः, बलिराजः** इति शब्दकल्पद्रुमः।[2] **सूर्यपुत्रः** इति मेदिनी। यथा –

**वैरोचनिस्त सुगते बलिदैत्यार्कपुत्रयोः।**
**शिखरी स्यापामार्गे शैलपादपयोः पुमान्।।**[3]

यथा विष्णुपादादिकेशवर्णनस्तोत्रे – **याभ्यां वैरोचनीन्द्रौ युगपदपि विपितृसम्पदो रेकधाम्।**

**१७. भैमसेनिः**

**भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वरः।**
**मतो मे बहुमायावी रथयूथपयूथपः ।।**[4]

भीमसेनस्यापत्यमिति विग्रहे **भीमसेन**शब्दात् सेनान्तवाच्ये **उदीचामिञ्**[5] इत्यनेन उदीचामाचार्याणां मते इञि प्रत्यये भीमसेन + इञ् इति जाते, अनुबन्धलोपे, भीमसेन + इ इति स्थिते, ञित्वादाद्यचो वृद्धौ सत्यां भैमसेन + इ इति जाते, भसंज्ञामाश्रित्य **यस्येति च**[6] इत्यनेनाकारलोपे भैमसेनि इति जाते ततः प्रातिपदिकत्वेन सौ, रेफे विसर्गे च **भैमसेनिः** इति रूपं सिद्ध्यति । घटोत्कचः इत्यर्थः।

**श्लोकसन्दर्भाः**

5.124.7.b 6 .43.41.a 6.52.16.b 6.79.29.a 6.79.3.2.b
6.84.2.b 6.87.22.b 6.90.38.b 6.100.13.a

---

१. अष्टा.४.१.९५ २. श.क.द्रु.भा.४, पृ.५१९ ३. मे.को.९८.११२
४. उ.प.११५.१ ५. अष्टा.४.१.१५३ ६. अष्टा.६.४.१४८

## १८. गाङ्गेयः

पितामहो हि गाङ्गेयः शन्तनवोरधि भारत।
महर्षि सदृशो जज्ञे देवैरपि दुरुत्सहः।
पित्रा ह्युक्तः प्रसन्नेन नाकामास्त्वं मरिष्यति ।।[१]

गङ्गायाः अपत्यं पुमान् इति विग्रहे गङ्गाशब्दात् **द्व्यचः**[२] इति सूत्रेण द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक्प्रत्यये गङ्गा + ढक् इति जाते, अनुबन्धलोपे गङ्गा + ढ इति स्थिते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[३] इति ढस्थाने एयादेशे कृते गङ्गा + एय इति जाते **किति च**[४] इत्यनेन कित्वादाद्यचो वृद्धौ सत्यां गाङ्ग + एय इति जाते भत्वादकारलोपे गाङ्गेय इति जाते ततः प्रातिपदिकत्वेन सौ सो रुत्वे विसर्गे च गाङ्गेयः इति रूपं सिद्धम्। भीष्मः इत्यर्थः।

**यथा देवीभागवते –**

वसुदेवं विदित्वैनं सुखं भुङ् सुतोद्भवम्।
गाङ्गेयोऽयं महाभाग भविष्यति बलाधिकः ।।[५]

**भद्रमुखा** इति राजनिघण्टुः।

श्लोकसन्दर्भाः

| | | | | |
|---|---|---|---|---|
| 5.145.26.b | 5.148.15.b | 5.153.25a | 5.153.31.a | 5.162.2.a |
| 5.162.4.b | 5.162.12.a | 5.165.12.a | 5.165.27.a | 5.166.10.b |
| 5.170.2.b | 5.172.11.a | 5.172.13.b | 5.175.21.b | 5.184.9.a |
| 5.186.16.c | 5.186.18.a | 5.188.5a | 5.189.1.a | 5.194.2.a |
| 5.194.5.a | 5.195.14.a | 6.16.20.b | 6.43.9.b | 6.43.10.b |
| 6.48.30.a | 6.48.35.c | 6.48.37.a | 6.48.41.a | 6.48.46.b |

१. उ.प.५४.४६ २. अष्टा.४.१.१२१ ३. अष्टा.७.१.२
४. पा.सू.७.२.११८ ५. दे.भा.१

| | | | | |
|---|---|---|---|---|
| 6.48.51.b | 6.48.67.b | 6 .50.99.a | 6.50.102.b | 6.54.19.b |
| 6.55.24.b | 6.67.1.b | 6.67.7.a | 6.77.1.a | 6.77.33.c |
| 6.78.2.b | 6.81.11.c | 6.82.6.b | 6.84.2.b | 6.91.1.b |
| 6.92.35.a | 6.93.8.b | 6.93.26.b | 6.93.36.b | 6.95.4.a |
| 6.95.14.a | 6.95.16.b | 6.95.17.b | 6.95.18.a | 6.99.2.a |
| 6.99.11.a | 6.99.14.a | 6.100.35a | 6.103.35a | 6.103.57.a |
| 6.103.84.a | 6.103.91.b | 6.103.98.b | 6.104.1.a | 6.105.1.a |
| 6.105.16.a | 6.105.29.a | 6.105.37.a | 6.106.3.b | 6.106.6.a |
| 6.106.6.c | 6.106.10.a | 6.106.25.a | 6.107/20.b | 6.110.20.b |
| 6.110.44.b | 6.112.53.a | 6.112.79.a | 6.112.99.b | 6.112.100.c |
| 6.113.16.b | 6.113.17.b | 6.114.b | 6.114.24.a | 6.114.43.b |
| 6.114.48.a | 6.114.64.a | 6,114.66.b | 6.114.88.a | 6.114.89.a |
| 6.114.93.b | 6.114.109.a | 6.117.7.b | 6.117.34.b | |

### १९. जान्हवी

**तत्र त्वां निहतं माता मया शरशताचितम्।**
**जान्हवी पश्यतां भीष्म गृध्रकङ्कबडाशनम्।।**[१]

जन्होरपत्यं स्त्रीति विग्रहे जन्हुवपदादपत्यार्थे **तस्यापत्यम्**[२] इति सूत्रेण षष्ठ्यन्तात् समर्थात् अण्प्रत्यये जन्हु + अण् इति जाते, अनुबन्धलोपे जन्हु + अ इति स्थिते **ओर्गुणः**[३] इति गुणे जन्हो + अ इति जाते **एचोऽयवायावः**[४] इति सूत्रेण अवादेशे जन्ह् + अव इति जाते **तद्धितेष्वचामादेः**[५] इति आद्यचो वृद्धौ सत्यां **टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः**[६] इति सूत्रेण अण्प्रत्ययान्तत्वात् स्त्रीत्वे ङीप्प्रत्यये कृते जान्हवी इति रूपं सिद्ध्यति । गङ्गानदी

---

१. उ.प.१७९.३ २. अष्टा.४.१.९२
३. अष्टा.६.४.१४६ ४. अष्टा.६.४.७५
५. अष्टा.७.२.११७ ६. अष्टा.६.४.१५

इत्यर्थः।

श्रीमद्वाल्मीकिरामायणे जान्हवीति नामकरणे हेतुरित्थं वर्ण्यते –

**ततो हि यजमानस्य जन्होरद्भुतकर्मणः।।**
**गङ्गा सम्प्लावयामास यज्ञवाटं महात्मनः।**
**तस्यावलेपनं ज्ञात्वा क्रुद्धो जह्वश्च राघव ।।**
**अपिबत्तु जलं सर्वं गङ्गायाः परमाद्भुतम्।।**
**ततो देवा सगन्धर्वा ऋषयश्च सुविस्मिताः।।**
**पूजयन्ति महात्मानं जन्हं पुरुषसप्तमम्।।**
**गङ्गा चापि नयन्ति स्म दुहुतृत्वे महात्मनः।।**
**ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत्प्रभुः।**
**तस्माज्जन्हुसुता गङ्गा प्रोच्यते जाह्ववीति च ।।**[१]

**श्लोकसन्दर्भाः**

5.176.33.a 5.179.3.b 6.32.31.b 6.115.52.a

**२०. भार्गवः**

**पूजयामासुरव्यग्रा मधुपर्केण भार्गवम्।**
**अर्चितश्च यथायोगं निषसाद सहैव तैः।।**[२]

भृगोरपत्यमिति विग्रहे भृगुशब्दादपत्यार्थे **ऋष्यन्धकवृष्णिकुरुभ्यश्च**[३] इति सूत्रेण ऋषिविशेषवाचत्वात् अण्प्रत्यये कृते भृगु + अण् इति जाते अनुबन्धलोपे कृते भृगु + अ इति स्थिते, आद्यचो वृद्धौ सत्याम् **ओर्गुणः**[४] इति सूत्रेण उवर्णान्तस्य भस्य गुणे कृते भार्गो + अ इति जाते **एचोऽयवायावः**[५] इति सूत्रेण अवादेशे भार्गव इति जाते ततः सौ रुत्वे विसर्गे च भार्गवः इति सिद्धम्। परशुराम इत्यर्थः।

१. रामा.१.४३.३४–३८ २. उ.प.१८६.१९ ३. अष्टा.४.१.११४
४. अष्टा.६.४.१४६ ५. अष्टा.६.१.७८

**परशुरामः, शुक्राचार्यः** इति शब्दकल्पद्रुमः।[1]

**धन्वी, गजः** इति मेदिनीकोशः। यथा –

**बान्धवो ज्ञातिसुहृदोर्भार्गवो गजधन्विनीः।**
**शुक्रे परशुरामे च भार्गवी पार्वतीश्रियो ।।**[2]

भार्गव इति भारतवर्षे प्राच्यदेशान्तर्गतदेशविशेषः । यथा – **ब्रह्मोत्तरा पवित्रया भार्गवा ज्ञेयमर्दका**[3] इति मार्कण्डेयपुराणम्।

**श्लोकसन्दर्भा :**

| | | | | |
|---|---|---|---|---|
| 5.174.23.a | 5.174.26.a | 5.176.3.b | 5.176.19. a | 5.176.30.b |
| 5.176.40.a | 5.177.13.b | 5.177.15.b | 5.178.10a | 5.178.16.b |
| 5.178.34.b | 5.179.21.a | 5.180.9.b | 5.179.28.b | 5.180.10.b |
| 5.182.4.a | 5.183.1.b | 5.183.7.a | 5.185.3.a | 5.186.36.a |
| 5.186.29.a | 5.186.29.c | 5.186.36.a | 6.10.49.a | 6.15.46.a |

**२१. पौलस्त्यः**

**अत्र राक्षसराजेन पौलस्त्येन महात्मना।**
**रावणेन तपश्चीर्त्वा सुरेभ्योऽमरता वृता ।।**[4]

पुलस्तेर्गोत्रापत्यमिति विग्रहे पुलस्तिशब्दात् गोत्रापत्यार्थ **गर्गादिभ्यो यञ्**[5] इति सूत्रेण पुलस्तिशब्दस्य गर्गादिगणे पठितत्वात् यत्प्रत्यये कृते पुलस्ति + यञ् इति जाते, अनुबन्धलोपे पुलस्ति + य इति स्थिते भत्वेनेकारलोपे पुलस्त्य + इ इति जाते **तद्धितेष्वचामादेः**[6] इति आद्यचो वृद्धौ पौलस्त्य इति जाते ततः प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **पौलस्त्यः** इति रूपं सिद्धम्। पुलस्त्यवंशी राक्षसराजरावण इत्यर्थः।

१. श.क.द्रु.भा.३,पृ.५०१ २. मे.को.४५,पृ.१६० ३. मा.पु.४९.१४
४. उ.प.१०७.१२ ५. अष्टा.४.१.१०५ ६. अष्टा.७.२.११७

पुलस्त्यो ब्रह्मपुत्रो महानृषिः। तद्यथा –

**पुरा कृतयुगे राम प्रजापतिसुतः प्रभुः।**
**पुलस्त्यो नाम ब्रह्मर्षिः साक्षादिव पितामहः ।।**[१]

**कुबेरः** इत्यमरः । यथा –

**कुबेरस्त्र्यम्बकसखो यक्षराड् गुहाकेश्वरः।**
**मनुष्यधर्मा धनदो राजराजो धनाधिपः।।**
**किं नरेशो वैश्रवणः पौलस्त्यो नरवाहनः।।**[२]

**कुबेरः** इति मेदिनी। यथा – **पौलस्त्यस्तु कुबेरे स्यात् दशग्रीवेऽपि पुंस्ययम्।**[३]

**श्लोकसन्दर्भा :**

5.193.52.b

**२२. पावकिः**

**प्रयातु नो भवानग्रे देवानामिव पावकिः।**
**वयं त्वामनुयास्यामः सौरभेया इवर्षभम् ।।**[४]

पावकस्याग्नेरयमिति विग्रहे पावकशब्दादपत्यार्थे **अत इञ्**[५] इति सूत्रेण अदन्तात् षष्ठ्यन्तात् प्रातिपदिकात् इञ्प्रत्यये पावक + इ इति जाते, अनुबन्धलोपे पावक + इ इति स्थिते, भत्वेनाकारलोपे आद्यचो वृद्धौ च सत्यां पावकि इति जाते, ततः प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **पावकिः** इति सिद्धम्। कार्तिकेयः इत्यर्थः।

---

१. रामा.७.२.४ २. अ.को.१.३९.४० ३. मे.को.११९.९५

४. उ.प.१५३.१५ ५. अष्टा.४.१.९५

यथा वराहपुराणे –

**कथं तं कृत्तिकापुत्रमुक्तवान् तं मुरं गुरुम्।**
**कथञ्च पावकिरसौ कथं वा मातृनन्दन ।।**[1]

## २३. शैखावत्य:

**ततस्तत्र महानासीद्ब्राह्मण: संशितव्रत:।**
**शैखावत्यस्तपोवृद्ध: शास्त्रे चारण्यके गुरु: ।।**[2]

शिखावतो गोत्रापत्यमिति विग्रहे शिखावत्प्रातिपदिकात् **तस्यापत्यम्**[3] इत्यणि, आदिवृद्धौ शैखावत इत्यत: **अभिजिद्विदभृच्छालावच्छिखावच्छमी–वदूर्णावच्छ्रुमदणो यञ्**[4] इति सूत्रेण यत्प्रत्यये शिखावत् + यञ् इति जाते, अनुबन्धलोपे, शिखावत् + य इति स्थिते, ञित्वात् **तद्धितेष्वचामादे:**[5] इति वृद्धौ कृतायां शैखावत्य इति जाते तत: प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **शैखावत्य:**[6] इति रूपं सिद्ध्यति। शैखावत्यनामक: विद्वान् ब्राह्मण इत्यर्थ: । **शिखावतोऽपत्यं शैखावत:, स एव शैखावत्य:** इति बालमनोरमा।[6]

## २४. शारद्वत:

**शारद्वतस्यावसथं स्म गत्वा महारथस्यास्त्रविदां वरस्य।**
**त्वं मामभीक्ष्णं परिकीर्तयन्वै कृपस्य पादौ सञ्जय पाणिना स्पृशे:**[7]

शरद्वतो गोत्रापत्यमिति विग्रहे शरद्वच्छब्दात् गोत्रापत्यार्थे **शरद्वच्छनकदर्भाभृगुवत्साग्रायणेषु**[8] इति फक् विहित:। स तु भार्गव इत्यर्थे ।

---

१. व.पु.२५.४४ २. उ.प.१७३.११ ३. अष्टा.४.१.९२
४. अष्टा.५.३.११८ ५. अष्टा.७.२.११७ ६. बा.म.५.३.११८
७. उ.प.३०.१२ ८. अष्टा.४.१.१०२

तद्भिन्ने तु **अनृष्यानन्तर्ये बिदादिभ्योऽञ्**[1] इत्यनेन सूत्रेण शरद्वच्छशब्दस्य बिदादिगणे पठितत्वात् अञ्प्रत्यये शरद्वत् +अञ् इति स्थिते, अनुबन्धलोपे, शरद्वत् + अ इति जाते **तद्धितेष्वचामादे:**[2] इत्यनेनाद्यचो वृद्धौ कृतायां शारद्वत इति जाते तत: प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **शारद्वत:** इति रूपं सिद्ध्यति। कृपाचार्य इत्यर्थ:।

**श्लोकसन्दर्भा :**

| | | | | |
|---|---|---|---|---|
| 5.47.84.b | 5.50.45a | 5.158.38. | 5.163.20a | 5.194.19.a |
| 6.20.13.a | 6.43.49a | 6.57.18.b | 6.80.21a | 6.83.13.a |
| 6.97.37.a | 6.106.12. b | 6.107.27.a | 6.107.31.a | |

**२५. आर्जुनि:**

**आर्जुनिं तु ततस्तूर्ण द्रौणिर्विव्याध पत्रिणा।**
**शल्यो द्वादशभिश्चैव कृपश्च निशितैस्त्रिभि ।।**[3]

अर्जुनस्यापत्यमिति विग्रहे अर्जुनशब्दादपत्यार्थे **बाह्वादिभ्यश्च**[4] इति सूत्रेण अर्जुनशब्दस्य बाह्वादिगणे पठितत्वात् इञि प्रत्यये कृते अर्जुन + इञ् इति जाते, अनुबन्धलोपे अर्जुन + इ इति जाते आद्यचो वृद्धौ सत्यां **यस्येति च**[5] इत्यनेनाकारलोपे, तत: प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च आर्जुनि: इति सिद्धम्। अभिमन्यु इत्यर्थ:।

आर्जुनि इति पदेन भीष्मपर्वणि अभिमन्यु–इरावतो: ग्रहणं वर्तते। परन्तु इरावान् इत्यर्थस्य ग्रहणमेकस्मिन् स्थाने एव दृश्यते । यथा –

१. अष्टा.४.१.१०४ २. अष्टा.७.२.११७ ३. भी.प.५१.७
४. अष्टा.४.१.९६ ५. अष्टा.६.४.१४८

**आर्जुनिस्तस्य समरे हयान्हत्वा महारथाः।**
**ननाद सुमहन्नादं तत्सैन्यं प्रत्यपूरयत् ।।**[1]

अन्यत्र सर्वत्रापि आर्जुनि इति पदेन अभिमन्योः ग्रहणं वर्तते।

श्लोकसन्दर्भाः

| | | | | |
|---|---|---|---|---|
| 6.51.7.a | 6.51.15.b | 6.53.33.b | 6.74.23.b | 6.77.27.b |
| 6.97.1.a | 6.97.28.b | 6.100.19.a | 6.107.18.a | 6.112.30.b |

### २६. दौर्योधनिः

**दौर्योधनिस्तु संक्रुद्धः सौभद्रं नवभिः शरैः।**
**विव्याध समरे राजंस्तदद्भुतमिवाभवत् ।।**[2]

दुर्योधनस्यापत्यमिति विग्रहे दुर्योधनशब्दादपत्यार्थे **अत इञ्**[3] इति सूत्रेण अदन्तात् षष्ठ्यन्तात् प्रातिपदिकात् इञ्प्रत्यये, दुर्योधन + इञ् इति स्थिते अनुबन्धलोपे, दुर्योधन + इ इति जाते, भत्वेनाकारलोपे, आद्यचो वृद्धौ सत्यां दौर्योधनि इति जाते ततः प्रातिपदिकत्वात् सुप्रत्यये रुत्वे विसर्गे च दौर्योधनिः इति रूपं सिद्धम्। लक्ष्मण इत्यर्थः।

### २७. कार्ष्णिः

**अस्त्रं द्रोणादर्जुनाद्वासुदेवात्कृपाद्भीष्माद्येन कृतं शृणोमि।**
**यं तं कार्ष्णिप्रतिमं प्राहुरेकं स सात्यकिः पाण्डवार्थे निविष्टः ।।**[4]

कृष्णस्यापत्यमिति विग्रहे कृष्णशब्दात् **अत इञ्**[5] इति प्राप्तमिञ् प्रत्ययं बाधित्वा **ऋष्यन्धकवृष्टिकुरुभ्यश्च**[6] इति सूत्रविहितस्य अञः अपवादतया

१. भी.प.४३.६७ २. भी.प.५१.९ ३. अष्टा.४.१.९५
४. उ.प.२२.२३ ५. अष्टा.४.१.९५ ६. अष्टा.४.१.११४

**बाह्वादिभ्यश्च**[१] इत्यनेन सूत्रेण कृष्णशब्दस्य बाह्वादिगणे पठितत्वात् इञि प्रत्यये कृते कृष्ण + इञ् इति स्थिते अनुबन्धलोपे कृते, कृष्ण + इ इति जाते, **तद्धितेष्वचामादे:**[२] इति आद्यचो वृद्धौ, **उरण् रपर:**[३] इति सत्रेण ऋकारस्थाने योऽण् स रपर: सन्नेव प्रवर्तते इत्यर्थकसूत्रप्रवृत्या रपरत्व, कार्ष्ण + इ इति जाते, भत्वात् **यस्येति च**[४] इत्यनेनाकारलोपे **कार्ष्णि** इति जाते तत: प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च कार्णि: इति रूपं सिद्ध्यति। प्रद्युम्न: इत्यर्थ:।

**कामदेव:** इति शब्दकल्पद्रुम:।[५] यथा हरिवंशे – **तामापतन्तीं मायान्तु कार्ष्णि: कमललोचन:।**[६] गन्धर्वविशेष:।

**श्लोकसन्दर्भा :**

| | | | | |
|---|---|---|---|---|
| 6.45.19.b | 6.45.20.b | 6.45.21.b | 6.56.24.a | 6.57.3.b |
| 6.57.11.b | 6.58.14.0 | 6.58.44.a | 6.74.24.a | 6.74.24.b |
| 6.96.22.a | 6.96.28.a | 6.97.11.a | 6.97.12.a | 6.97.17.b |
| 6.107.19.a | 6.112.5.a | 6 .112.3.a | 6.112.5.a | |

**२८. लक्ष्मण:**

**लक्ष्मणस्तव पुत्रस्तु तथा दु:शासनस्य च।**
**उभौ तौ पुरुषव्याघ्रौ संग्रामेष्वनिवर्तिनौ ।।**[७]

लक्ष्मीरस्यास्तीति विग्रहे **लोमादिपामादिपिच्छादिभ्य: शनेलच:**[८] इति सूत्रेण लक्ष्मीशब्दस्य पामादिगणे पठितत्वात् नप्रत्यये लक्ष्मी । न इति जाते, **लक्ष्म्या अच्च**[९] इति गणसूत्रेणेकारस्य स्थाने अकारदेशे कृते सति लक्ष्म + न इति स्थिते,

---

१. अष्टा.४.१.९६ २. अष्टा.७.२.११७ ३. अष्टा.१.१.५० ४. अष्टा.६.४.१४८
५. श.क.द्रु.भा.२,पृ.१०८ ६. हरि.म.१६३.१९ ७. उ.प.१६३.१४ ८. अष्टा.५.२.१००
९. लक्ष्म्या अच्च (ग.सू.१२१) इत्यपि पामादिगणसूत्रम् । लक्ष्मीशब्दात् मत्वर्थे नं प्रत्यय: स्यात् प्रकृतेरकारोऽन्तादेशश्च । लक्ष्मण इति । लक्ष्मीरस्त्यास्तीति विग्रह: इति बालमनोरमाकार: ।

**अट्कुप्वाङ्नुम्व्यवायेऽपि**[१] इत्यनेन नस्य णकारे लक्ष्मण इति जाते ततः प्रातिपदिकत्वात् सुप्रत्यये रुत्वे विसर्गे च **लक्ष्मणः** इति रूपं सिद्ध्यति। दुर्योधनपुत्रः लक्ष्मणः इत्यर्थः।

**श्रीरामभ्राता** इति मेदिनी।[२] यथा –

**लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति।**
**रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत् ॥**

**श्लोकसन्दर्भा :**

| 6.51.8.a | 6.51.11.a | 6.69.30.b | 6.69.31.a | 6.69.32.a |
|---|---|---|---|---|
| 6.69.33.b | 6.69.34.a | 6.69.36.a | 6.100.26.c | |

**२९. नाकुल :**

**तथा तस्मिन्वर्तमाने दुष्कर्णो भ्रातुरन्तिके।**
**चिच्छेद समरे चापं नाकुलेः क्रोधमूर्छितः ॥**[३]

नकुलस्यापत्यमिति विग्रहे नकुलशब्दात् **ऋष्यन्धकवृष्णिकुरुभ्यश्च**[४] इति सूत्रेण कुरुवंश्यवाचित्वात् अण्प्रत्यये नकुल + अण् इति जाते, अनुबन्धलोपे, नकुल + अ इति स्थिते, **तद्धितेष्वचामादेः**[५] इत्यनेन णित्वादाद्यचो वृद्धौ सत्यां नाकुल + अ इति जाते, भत्वेनाकारलोपे, नाकुल इति रूपम्। ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च नाकुलः इति सिद्ध्यति। शतानीक इत्यर्थः।

**नकुलपुत्रः** इति सिद्धान्तकौमुदी।

महाभारतस्थभीष्मपर्वणि वस्तुतः स्थलद्वये नाकुलशब्दस्य प्रयोगः दृश्यते। परन्तु तत्रैकस्मिन् स्थले एव नकुलपुत्रस्य ग्रहणं वर्तते। अपरत्र तु नाकुलदेशीयाः

---

१. अष्टा.८.४.२ २. मे.को.७६–७७,पृ.५० ३. भी.प.७५.४३

४. अष्टा.४.१.११४ ५. अष्टा.७.२.११७

इत्यर्थः गृह्यते। यथा – **शबरास्तुम्बुपाश्चैव वत्साश्च सह नाकुलैः।**[१] अत्र नकुलदेशे भवः इति विग्रहे **तत्र भवः**[२] इति सूत्रेण अण्प्रत्ययः चिन्तनीयः।

### ३०. राधेयः

**अनुवर्त्यति तं चापि धृतराष्ट्रः सुतप्रियः।**
**भीष्मद्रोणौ च कार्पाण्यान्मौर्ख्याद् राधेयसौबलौ ।।**[३]

राधाया अपत्यं पुमानिति विग्रहे **द्व्यचः**[४] इति सूत्रेण द्व्यच्कात् स्त्रीप्रत्ययान्तात् राधाशब्दात् ढकि प्रत्यये कृते राधा + ढक् इति स्थिते, अनुबन्धलोपे राधा + ढ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[५] इति ढस्य स्थाने एयादेशे राधा + एय इति जाते भत्वेनाकारलोपे कृते **किति च**[६] इति सूत्रेण कित्त्वसामर्थ्यात् वृद्धौ सत्यां राधेय इति जाते, ततः प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **राधेयः** इति सिद्ध्यति। कर्ण इत्यर्थः।

सूतपुत्रः कर्णः। यथा महाभारते एव – **सूतपुत्रस्तु राधेयो गुरुं द्रोणमियात्तदा।**[७]

**श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.21.16.a | 5.21.18.b | 5.25.11.b | 5.103.36.b | 5.135.28.b |
| 5.138.2.a | 5.138.5.a | 5.138.6.a | 5.141.48.b | 5.143.1.a |
| 5.143.2.a | 5.148.11.b | 5.165.9.b | 5.194.22.a | 6.41.84.a |
| 6.41.85. b | 6.41.86.a | 6.94.7.b | 6 .117.2.a | 6.117.5.a |
| 6.117.9.a | 6.117.24.b | | | |

---

१. भी.प.४६.५१ २. अष्टा.४.३.५३ ३. उ.प.४.२
४. अष्टा.४.१.१२१ ५. अष्टा.७.१.२ ६. अष्टा.७.२.११८
७. महा.१.१३४.४१

३१. **साहदेविः**

**सुदक्षिणस्तु समरे साहदेविं महारथम्।**
**विद्ध्वा नाकम्पयत वै मैनाकमिव पर्वतम् ।।**[१]

सहदेवस्यापत्यमिति विग्रहे सहदेवशब्दात् **अत इञ्**[२] इति सूत्रेण अदन्तात् षष्ठ्यन्तात् प्रातिपदिकात इञ्प्रत्यये प्राप्ते तदपवादत्वेन **ऋष्यन्धकवृष्णि–कुरुभ्यश्च**[३] इति प्राप्तमंण बाधित्वा बाह्वादिगणस्य आकृतिगणत्वेन **बाह्वादिभ्यश्च**[४] इति इञ् प्रत्यये सहदेव + इञ् इति स्थिते, अनुबन्धलोपे, सहदेव + इ इति स्थिते ञित्वादाद्यचो वृद्धौ सत्यां साहदेव + इ इति जाते, भत्वेनाकारलोपे कृते साहदेवि इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **साहदेविः** इति रूपं सिद्ध्यति। श्रुतकर्मा इत्यर्थः।

**श्लोकसन्दर्भाः**

6.43.65.a

**३२. वार्द्धक्षत्रिः**

**वार्द्धक्षत्रिः सर्वसैन्यस्य मध्ये भूरिश्रवाः पुरुमित्रो जयश्च।**
**शाल्वा मत्स्याः केकयाश्चापि सर्वे गजानिकैर्भ्रातरो योत्स्यमानाः ।।**[५]

वृद्धक्षत्रस्यापत्यमिति विग्रहे वृद्धक्षत्रशब्दादपत्यार्थे **अत इञ्**[६] इति सूत्रेण अदन्तात् षष्ठ्यन्तात् प्रातिपदिकात् इञि प्रत्यये वृद्धक्षत्र + इञ् इति स्थिते अनुबन्धलोपे, वृद्धक्षत्र + इ इति जाते, ञित्वादाद्यचो वृद्धौ सत्याम् **उरण् रपरः**[७] इति सूत्रेण रपरत्वे वार्द्धक्षत्र + इ इति स्थिते भत्वादकारलोपे वार्द्धक्षत्रि इति जाते ततः

१. भी.प.४३.६४ २. अष्टा.४.१.९५ ३. अष्टा.४.१.११४
४. अष्टा.४.१.९६ ५. भी.प.२०.१२ ६. अष्टा.४.१.९५
७. अष्टा.१.१.५१

प्रातिपदिकत्वात् सुप्रत्यये रुत्वे विसर्गे च **वार्द्धक्षत्रिः** इति रूपं सिद्ध्यति। जयद्रथ इत्यर्थः।

### ३३. सैन्धवः

**अयं स रथ आयाति योऽयासीत्पाण्डवान्प्रति।**
**दूतो नस्तूर्णमायात सैन्धवै साधुवाहिभि ।।**[१]

सिन्धुनदीसमीपे देशे भवः, तत्र जातः इत्यादिषु अर्थेषु **कच्छादिभ्यश्च**[२] इति सूत्रेण सिन्धशब्दस्य कच्छादिगणे पठितत्वात् अण्प्रत्यये कृते, सिन्धु + अण् इति स्थिते अनुबन्धलोपे, सिन्धु + अ इति जाते, **ओर्गुणः**[३] इति सूत्रेणोवर्णान्तात् गुणे कृते, सिन्धो + अ इति जाते **तद्धितेष्वचामादेः**[४] इति सूत्रेण वृद्धौ सत्यां सैन्धो + अ इति स्थिते, **एचोऽयवायावः**[५] इति सूत्रेण अवादेशे सैन्धव इति जाते, ततः प्रातिपदिकत्वात् सुप्रत्यये रुत्वे विसर्गे च सैन्धवः इति रूपं सिद्ध्यति। सिन्धुदेशीय इत्यर्थः।।

**सिन्धुदेशाधिपतिः जयद्रथः** इति शब्दकल्पद्रुमः।[६]

यथा महाभारते –

**यदा द्रोणः कृतवर्मा कृपश्च कर्णौ द्रौणिर्भद्रणश्च शूरः।**
**अमर्षयन् सैन्धवं वध्यमान तदा नाशसे विजयाय सञ्जय ।।**[७]

सिन्धुदेशोत्पन्नमात्रे। यथा – हारहलानांश्च चीनांश्च तुखारान् सैन्धवांस्तथा।

**शीतशिवं मणिबन्धम्** इत्यमरः।[८] यथा –

१. उ.प.४६.१३ २. अष्टा.४.२.१३२ ३. अष्टा.६.४.१४६
४. अष्टा.७.२.११७ ५. अष्टा.६.१.१७८ ६. श.क.द्रु.भा.५,पृ.४१४
७. महा.१.१.१९६ ८. अ.को.२.२४६

**सैन्धवोऽस्त्री शीतशिवं मणिबन्धं च सिन्धुजे।**
**चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते ।।**

**श्लोकसन्दर्भा:**

| | | | | |
|---|---|---|---|---|
| 5.56.15.b | 5.93.20.a | 5.132.32.b | 5.133.19.a | 6.90.13.b |
| 5.152.28.a | 5.161.6.b | 5.196.6.a | 5.140.14.b | 6.109.1.b |
| 6.48.21.a | 6.48.25.a | 6.53.25.a | 6.16.33.a | 6.109.10.b |
| 6.68.3.a | 6.77.2.b | 6.81.10.c | 6 .43.52.a | 6.109.35a |
| 6.95.27. b | 6.96.15.b | 6.104.55.b | 6.55.131.b | 6.110.2.b |
| 6.109.13.a | 6.109.15.b | 6.109.17.c | 6.67.19.a | 6.112.42.b |
| 6.110.21.a | 6.112.40.a | 6.112.41.a | 6.87.72.b | 6.114.14.b |

**३४. मागध:**

**मागधश्च जयत्सेनो जारासन्धिर्महाबल:।**
**अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ।।**[१]

मगधानां राजा तेषामपत्यं वा इति विग्रहे मगधशब्दात् **व्यञ्मगधकलिङ्गसूरमसादण्**[२] इति सूत्रेण क्षत्रियाभिधानात् जनपदवाचकाद्वा प्रातिपदिकात् अण्प्रत्यये कृते मगध ।अण् इति जाते, अनुबन्धलोपे, मगध + अ इति जाते, आद्यचो वृद्धौ कृतायां मागध + अ इति जाते, भत्वेनाकारलोपे च मागध इति सिद्धम्। तत: प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **मागध:** इति रूपं सिद्ध्यति। मगधदेशीय: इत्यर्थ:।

**जरासन्धराज:** इति शब्दकल्पद्रुम:।[३] यथा श्रीभागवते – **मागधो न च हन्तव्यो भूय: कर्ता बलोद्यमम्**[४] इति।

१. उ.प.१९.८ २. अष्टा.४.१.१६८ ३. श.क.द्रु.भा.३,पृ.६८२
४. भाग.१० स्कन्ध:

**श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.36.53. b | 5.50.38. b | 5.52.2. b | 5.56.8.a | 5.88.17.a |
| 5.92.4.a | 5.138.26.a | 5.154.10.a | 5.164.24.b | 5.196.18.b |
| 5.197.14.b | 6.10.44.a | 6.10.48.b | 6.17.27.b | 6.18.15.b |
| 6.20.7.b | 6.47.12.b | 6.52.8.a | 6.58.31.a | 6.58.31.d |
| 6.58.42.a | 6.58.43.a | 6.83.8.b | 6.93.29.a | 6.104.14.b |
| 6.104.56.b | 6.110.29.a | 6.110.33.b | | |

**३५. वारुणः**

**दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमम्।**
**वारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी ॥**[१]

वरुणेन निवृत्तमिति विग्रहे वरुणशब्दात् **सङ्कलादिभ्यश्च**[२] इति सूत्रेण वरुणशब्दस्य सङ्कलादिगणे पठितत्वात् अण्प्रत्यये वरुण + अणु इति स्थिते अनुबन्धलोपे, वरुण + अ इति जाते, ञित्वादाद्यचो वृद्धौ सत्यां वारुण + अ, भत्वेनाकारलोपे वारुण इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च वारुणः इति सिद्ध्यति। शस्त्रविशेषः इत्यर्थः।

**भारतस्य खण्डविशेषः**[३] इति शब्दकल्पद्रुमः । यथा विष्णुपुराणे – **इन्द्रद्वीपस्तथा सौम्यो गन्धर्वस्तथा वारुणः।**[४]

वरुणसम्बन्धीति यथा –

**पश्चिमे पुष्पदन्तश्च वारुणश्च प्रशस्यते।**
**उत्तरेण तु भल्लाटं सौम्यश्च शुभदं भवेत् ॥**
**उदुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः ॥**[५]

---

१. उ.प.५९.१२ २. अष्टा.४.२.७४ ३. श.क.द्रु.भा.४,पृ.३५०

४. वि.पु.२.३.९ ५. वि.पु.२.३.९

**श्लोकसन्दर्भाः**

5.96.14.a 5.155.5.b 5.166.33.a 5.181.12.b 6.81.27.b

**३६. फल्गुनः**

**यो बीभत्सोर्हृदये प्रौढ आसीदस्थिप्रच्छिन्मर्मघाती सुघोरः।**
**कर्णाच्छरो वाङ्मयस्मिग्मतेजाः प्रतिष्ठितो हृदये फल्गुनस्य ॥**[१]

फल्गुनीषु नक्षत्रेषु जातः इति विग्रहे फल्गुनीशब्दात् **सन्धिवेलातुनक्षत्रेभ्योऽण्**[२] इति सूत्रेण फल्गुनिशब्दस्य नक्षत्रवाचित्वात् अण्प्रत्यये फल्गुनी + अण् इति स्थिते, **श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्त–विशाखाऽषाढाबहुलाल्लुक्**[३] इति अणः लुकि, ततः **लुक्तद्धितलुकि**[४] इति ङीपः स्त्रीप्रत्ययस्यापि लुकि सति फल्गुन इति गते ततः प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **फल्गुनः** इति रूपं सिद्धम्। अर्जुनः इत्यर्थः।

**गुडाकेशः, नदीजवृक्षः, अर्जुनवृक्षः** इति मेदिनी। यथा –

**फल्गुनस्तु गुडाकेशे नदीजार्जुनभूरुहे।**
**तपस्यसंज्ञे मासे तत्पूर्णिमायान्तु फाल्गुनी ॥**[५]

**श्लोकसन्दर्भाः :**

| | | | | |
|---|---|---|---|---|
| 5.51.6.c | 5.51.8.b | 5.159.10.a | 6.16.19.b | 6.54.3.c |
| 6.86.46.a | 6.102.70.a | 6.103.37.a | 6.114.18.b | 6.114.26.c |

**३७. सांग्रामिकम्**

**द्वारकां तु गते कृष्णे युधिष्ठिरपुरोगमाः।**
**चक्रुः सांग्रामिकं सर्वं विराटश्च महीपतिः ॥**[६]

---

१. उ.प.५९.३७ २. अष्टा.४.३.१६ ३. अष्टा.४.३.३४

४. अष्टा.१.२.४९ ५. मे.को.८१.१५.१६ ६. उ.प.५.१२

सङ्ग्रामाय प्रभवति इति विग्रहे संग्रामशब्दात् **तस्मै प्रभवति सन्तापादिभ्यः**[१] इति सूत्रेण ठञि प्रत्यये संग्राम + ठञ् इति जाते, अनुबन्धलोपे, संग्राम + ठ इति जाते, **ठस्येकः**[२] इकादेशे, संग्राम + इक, ञित्वादाद्यचो वृद्धौ कृतायां सांग्राम + इक, **यस्येति च**[३] इत्यकारलोपे सांग्रामिक इति जाते ततः प्रातिपदिकसंज्ञायां नपुंसकलिङ्गे द्वितीयैकवचने अम्प्रत्यये **अतोऽम्**[४] इति सूत्रेणामादेशे कृते द्वयोरकारयोः **अमि पूर्वः**[५] इति पर्वरूपे च **सांग्रामिकम्** इति पदं निष्पन्नम्। संग्रामकुशलः इत्यर्थः ।

**सेनापतिः, सङ्ग्रामकुशलः**[६] इति सिद्धान्तकौमुदी। **संग्रामसम्बन्धिनि**[७] इति शब्दकल्पद्रुमः।

**श्लोकसन्दर्भाः**

5.71.36.c 5.150.13.a

**३८. किरीटिनम्**

**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ।।**[८]

प्रशस्तः किरीटः अस्यास्तीति विग्रहे अत **इनिठनौ**[९] इति सूत्रेण किरीटशब्राददन्तान्मत्वर्थे इनि प्रत्यये किरीट + इनि इति जाते, **उपदेशोऽजनुनासिक इत्**[१०] इति इकारस्येत् संज्ञायां प्राप्तायां **तस्य लोपः**[११] इति

---

१. अष्टा.५.१.१००  २. अष्टा.७.३.५०  ३. अष्टा.६.४.१४८
४. अष्टा.७.१.२४  ५. अष्टा.६.१.१०७  ६. सि.कौ.५.१.१०१ इति सूत्रभाष्ये
७. श.क.द्रु.भा.५,पृ.३२४  ८. भी.प.३३.१७  ९. अष्टा.१.३.२
१०. अष्टा.१.३.९  ११. अष्टा.१.३.९

लोपे किरीट + इन् इति जाते भत्वादकारलोपे किरीटिन् शब्दः सिद्ध्यति । ततः प्रातिपदिकसंज्ञायां द्वितीयैकवचने अम्प्रत्यये किरीटिनम् इति रूपं सिद्ध्यति।

**किरीटोऽस्त्यस्य इति अर्जुनः** इति शब्दकल्पद्रुमः।[१] मुकुटः इति अमरः।[२] एवमेव **गदिनम्, चक्रिणम्** इत्यादि शब्दाः निष्पाद्यन्ते। **गदिनम्** – गदास्त्यस्येति। **चक्रिणम्** – चक्रमस्त्यस्मिन्निति वा।

**श्लोकसन्दर्भाः**

**किरीटिनम्** – 6.33.46.a
**गदिनम्** – 5.166.38.b 6.33.17.a 6.18.6.b 6.33.46.a 6.80.23.b
**चक्रिणम्** – 6.33.17.a

### ३९. आवन्त्यः

**आवन्त्यौ च महीपालौ महाबलसुसंवृतौ।**
**पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनम् ।।**[३]

अवन्तीनामपत्यं राजा वा इति विग्रहे अवन्तिशब्दादपत्यार्थे **वृद्धेत्कोसलाजादाञ्ञ्यङ्**[४] इति सूत्रेण इकारान्तत्वात् ञ्यङ्प्रत्यये अवन्ति + ञ्यङ् इति स्थिते 'ञ्' 'ङ्' इत्येतयोः अनुबन्धलोपे, अवन्ति + य इति जाते, भत्वादिकारलोपे आद्यचो वृद्धौ च कृतायाम् आवन्त्य इति जाते, ततः सुप्रत्यये रुत्वे विसर्गे च **आवन्त्यः** इति शब्दः सिध्यति। विन्दानुविन्दनामकनृपौ, अवन्तिवासिनश्च इत्यर्थः।

**श्लोकसन्दर्भाः**

5.54.60.a 5.61.16.a 6.67.19.a 6.79.12.a 6.82.35.b
6.83.6.b 6.88.22.a 6.90.13.c 6.95.30.a 6.110.3.b

१. श.क.द्रु.भा.२.पृ.१२८ २. अ.को.२.६.१०२ ३. उ.प.१९.२४ ४. अष्टा.६.१.१६९

**४०. हैडिम्ब:**

**भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वर:।**
**मतो मे बहुमायावी रथयूथपयूथप: ।।**[१]

हिडिम्बाया अपत्यं पुमानिति विग्रहे **स्त्रीभ्यो ढक्**[२] इति प्राप्तं ढक् प्रत्ययं बाधित्वा **शिवादिभ्योऽण्**[३] इति सूत्रेण अण्प्रत्यये, (वस्तुत: हिडिम्बाशब्दस्य शिवादिगणे पाठ: नास्ति चेदप्याकृतिगणत्वादण् प्रत्यय:) हिडिम्बा + अण् इति स्थिते अनुबन्धलोपे, हिडिम्बा + अ इति जाते, भत्वेनाकारलोपे, आद्यचो वृद्धौ च सत्यां हैडिम्ब इति जाते, तत: सुप्रत्यये रुत्वे विसर्गे च **हैडिम्ब:** इति पदं सिद्ध्यति। घटोत्कच इत्यर्थ:।

**श्लोकसन्दर्भा:**

| | | | |
|---|---|---|---|
| 6.54.14.a | 6.60.57.a | 6.60.67.a | 6.77.28.a |
| 6.79.26.b | 6.79.39.a | 6.79.24.a | 6.85.18.a |
| 6.87.29.a | 6.88.17.b | 6.89.10.b | 6.89.14.a |
| 6.90.46.a | 6.91.17.a | 6.107.36.a | |

**घ. गारुडम्**

**गारुडं च महाव्यूहं चक्रे शान्तनवस्तदा।**
**पुत्राणां ते जयाकांक्षी भीष्म कुरुपितामह: ।।**[४]

गरुडस्येदमिति विग्रहे गरुडशब्दात् **तस्येदम्**[५] इति सूत्रेण अण्प्रत्यये गरुड + अण् इति जाते, अनुबन्धलोपे, गरुड + अ इति स्थिते, भत्वेनाकारलोपे, आद्यचो वृद्धौ सत्यां गारुड इति जाते, तत: प्रातिपदिकत्वेन द्वितीयैकवचने अम्प्रत्यये पूर्वरूपे च गारुडम् इति रूपं सिद्धम्। गारुडनामकं महाव्यूहमित्यर्थ:।

---

१. उ.प.१६९.६    २. अष्टा.४.१.१२०    ३. अष्टा.४.१.११२

४. भी.प.५२.२    ५. अष्टा.४.३.१२०

**यद्वा, गरुडं श्रोतारमालम्ब्य भगवता यदुपदिष्टम्। यद्वा, गरुडेन प्रोक्तमिति** शब्दकल्पद्रुमः। गरुडः गरुडवर्णस्तस्येदम् गरुड + अण्।[१]

गरुडवर्ण इव वर्णोऽस्येति भावः, मरकतमणिः इति राजनिघण्टुः।

मेदिनीकोशेऽपि— **भुव्यथो गरुडं क्ष्वेडमन्त्रे मरकतेऽपि च।**[२]

गरुडाकारेण सेनारचनयाधिष्ठितत्वात् महाव्यूहभेदः। यथा महाभारते — **गारुडञ्च महाव्यूहं चक्रे शान्तनवस्तदा**[३] इति।

**४२. कालिङ्गः**

**आवन्त्यकालिङ्गजयद्रथेषु वेदिध्वजे तिष्ठति बाह्लिके च।**
**अहं हनिष्यामि सदा परेषां सहस्त्रशश्चायुतशश्च योधान् ॥**[४]

कलिङ्गस्यापत्यं राजा वा इति विग्रहे कलिङ्गशब्दात **द्व्यञ्मगधकलिङ्गसूरमसादण्**[५] इति अणि कृते कलिङ्ग । अण् इति स्थिते, अनुबन्धलोपे, कलिङ्ग + अ इति जाते, **तद्धितेष्वचामादेः**[६] इत्यनेनाद्यचो वृद्धौ कालिङ्ग + अ इति स्थित्यां, **यचि भम्**[७] इति सूत्रेण भसंज्ञायां **यस्येति च**[८] इत्यकारलोपे कालिङ्ग इति जाते ततः प्रातिपदिकत्वात् सुप्रत्यये रुत्वे विसर्गे च **कालिङ्गः** इति सिद्धम्।

कं जलं लिङ्ग चिन्हमस्येति कलिङ्गनामदेशः समुद्रसमीपस्थः । इत्थं व्युत्पत्तिं प्रदर्शयन् श्रीमान् वामनशिवराम आप्टे महोदयः स्वकोशे पद्यमिदमवतारयति —

१. श.क.द्रु.भा.२,पृ.३२५ २. मे.को.२८,पृ.४२ ३. महा.९.५३.२
४. उ.प.६१.१६ ५. अष्टा.४.१.१६८ ६. अष्टा.७.२.११७
७. अष्टा.१.४.१८ ८. अष्टा.६.४.१४८

**जगन्नाथात्समारभ्य कृष्णतीरान्तगः प्रिये।**
**कलिङ्गदेशः सम्प्रोक्तो वाममार्गपरायणः ॥**[१]

(केन जलेनालिङ्ग्यते इति। क + आ लिगि कर्मणि घञ् ) **भूमिकर्कारूः ।**

(कं जलमालिङ्गति। आ + लिगि + कर्मण्यम् ) **हस्ती।**

(कुत्सितं लिङ्गम् अङ्गादिचिन्ह यस्येति कोः कादेशः) **लौहभेदः।**

**कलिङ्गदेशोद्भवः** इति शब्दकल्पद्रुमः।[२] (कं वातम् आलिङ्गति गृह्वाति अश्नाति इत्यर्थः।) **सर्पः** इति मेदिनी। यथा – **कालिङ्गो भूमिकारौ दन्तावलभुजङ्गयोः।**[३]

**श्लोकसन्दर्भाः**

6.16.34.a 6.17.26.a 6.50.19.b 6.50.77.b 6.50.82.a
6.50.108.a 6.50.112.b 6.67.13.b

**४३. वैवस्वतः**

**एवं वदत्यङ्गिरसां वरिष्ठे बृहस्पतौ लोकपालः कुबेरः ।**
**वैवस्वतश्चैव यमः पुराणो देवश्च सोमो वरुणश्चाजगाम ॥**[४]

विशेषेण वस्ते आच्छादयीति व्युत्पत्त्या विपूर्वकवसधातोः **क्विपि**[५] विवस् इति पदसिद्धिः। व प्रकाशः। तदस्यास्तीति **तदस्यास्त्यस्मिन्निति मतुप्**[६] इति सूत्रेण मतुप्प्रत्यये कृते विवस + मतुप् इति जाते, अनुबन्धलोपे, **मादुपधायाश्च मतोर्वोऽयवादिभ्यः**[७] इत्यनेन मस्य वत्वे **विवस्वात्** इति रूपं सिद्ध्यति। ततः

---

१. संस्कृत–हिन्दीकोष, शिवराम आप्टे, पृ.२५७ २. श.क.द्रु.भा.२,पृ.११३
३. मे.को.२४.३२ ४. उ.प.१६.२७ ५. अष्टा.३.२.७६
६. अष्टा.५.२.९४ ७. अष्टा.८.२.९

प्रातिपदिकत्वं, सुप्रत्यये, **अत्वसन्तस्य चाधातोः**[1] इति उपधादीर्घे, हल्ङ्यादिलोपे संयोगान्तलोपे च विवस्वान् इति रूपम्।

**विवस्वान् सूर्यः** इत्यमरः। यथा – **भास्वद्विवस्वत्सप्ताश्व–हरिदश्वोष्णरश्मयः।**[2]

मेदिनीकोशेऽपि यथा – **विवस्वान् विबुधे सूर्य तन्नगर्यां विवस्वती।**[3]

विवस्वत्प्रातिपदिकात् **तस्यापत्यम्**[4] इत्यनेनाण्प्रत्यये विवस्वत् + अण्, अनुबन्धलोपे विवस्वत् + अ इति जाते आद्यचो वृद्धौ कृतायां वैवस्वत इति जाते ततः प्रातिपदिकत्वात् सुप्रत्यये रुत्वे विसर्गे च **वैवस्वतः** इति शब्दः सिद्ध्यति। यम इत्यर्थः।

**यमः** इत्यमरः।[5] यथा ऋग्वेदे[6] – **वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषादुवस्य** इति। **वैवस्वतं विवस्वतः सूर्यस्य पुत्रम्** इति सायणः।

**श्लोकसन्दर्भाः**

5.16.34.a 5.35.61.b 5.57.14.a 5.57.19.b 6.10.5.b
6.73.66.a 5.164.28.b

**४४. माण्डव्यः**

**माण्डव्यस्याश्रमे राजन्दिलीपस्याश्रमे तथा।**
**रामह्रदे च कौरव्य पैलगार्ग्यस्य चाश्रमे ॥**[7]

मण्डोर्गोत्रापत्यम् इति विग्रहे मण्डुशब्दात् **गर्गादिभ्यो यञ्**[8] इति मण्डुशब्दस्य गर्गादिगणे पठितत्वात् यञ्प्रत्यये मण्डु + यञ् इति जाते अनुबन्धलोपे

---

१. अष्टा.६.४.१४ २. अ.को.१.६९ ३. मे.को.७०.२२० ४. अष्टा.४.१.९२
५. अ.को.पृ.१०१ ६. ऋ.१०.१४.१ ७. उ.प.१८७.२७ ८. अष्टा.४.१.१०५

मण्डु + य, **तद्धितेज्वचामादेः**[1] इत्यनेनाद्यचो वृद्धौ माण्डु + य इति जाते, **ओर्गुणः**[2] इत्यनेन गुणे, **वान्तो यि प्रत्यये**[3] इत्यवादेशे च **माण्डव्य** इति सिद्ध्यति। ततः प्रातिपदिकत्वात् सुप्रत्यये रुत्वे विसर्गे च माण्डव्यः इति शब्दः सिद्ध्यति। ऋषिविशेषः।

अस्मिन्नेव श्लोके पैलगार्यो शब्दौ स्तः। **गार्ग्यः** इति शब्दे गर्गस्य गोत्रापत्यमिति विग्रहे गर्गशब्दात् **गर्गादिभ्यो यञ्**[4] इति सूत्रेण यञ्प्रत्ययः। प्रक्रिया पूर्ववत्। तथा च **पैलः** इति शब्दे पीलाया अपत्यमिति विग्रहे **पीलाया वा**[5] इति सूत्रेण विकल्पेण अण् प्रत्ययः। प्रक्रिया पूर्ववत्।

**४५. वायव्यम्**

**ततोऽमस्त्रं वायव्यं जामदग्न्ये प्रयुक्तवान्।**
**प्रत्याजघ्ने च तद्रामो गुह्यकास्त्रेण भारत ॥**[6]

वायुर्देवतास्येति वायव्यम्। वायु इति प्रातिपदिकात् **वाय्वृतुपित्रुषसो यत्**[7] इति यत्प्रत्यये कृते वायु + यत् इति स्थिते, अनुबन्धलोपे वायु + य इति जाते, **ओर्गुणः**[8] इत्यनेन गुणे, **वान्तो यि प्रत्यये**[9] इत्यवादेशे च वायव्य इति जाते ततः सौ, अमि, पूर्वरूपे च वायव्यमिति सिद्ध्यति। अस्त्रविशेषः इत्यर्थः।

वायुबलयुक्तत्वादस्यास्त्रस्य प्रलयङ्करत्वं गम्यते। युद्धेऽस्मिन् भयङ्करवायुरायाति सर्वा दिगन्धकाराच्छन्ना भवन्तीति वायव्यास्त्रस्य वैशिष्ट्यम्। दैवशक्तिसम्पन्नत्वादमोघत्वमच्छेद्यत्वञ्च सूच्यते।

**अस्त्रविशेषः, वायुसम्बन्धिदिगादि** इति शब्दकल्पद्रुमः।[10]

---

१. अष्टा.७.२.११७  २. अष्टा.६.४.१४६  ३. अष्टा.६.१.७६  ४. अष्टा.४.१.१०५
५. अष्टा.४.१.११८  ६. उ.प.१८१.११  ७. अष्टा.४.२.३०
८. अष्टा.६.४.१४६  ९. अष्टा.६.१.७६  १०. श.क.द्रु.भा.४.पृ.३४१

वायुदेवताकपशुहविरादि। यथा ऋग्वेदे[1] —

**तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्।**
**पशून्ताचक्रे वायव्यानारण्यान् ग्राम्याश्च ये।**

**वायव्यान् वायुदेवताकान्** इति तद्भाष्ये सायणः। षट्शताधिकचतुर्विंशतिसहस्रश्लोकात्मकवायुनामकमहापुराणम्। यथा देवीभागवते[2] —

**अयुतं वामनाख्यञ्च वायव्यं षट्शतानि च।**

**श्लोकसन्दर्भाः**

6.10.44.a 6.10.55.b 6.74.33.a 6.112.108.a

**४६. पौरवः**

**तस्य पौरवकालिङ्गौ काम्बोजश्च सुदक्षिणः।**
**क्षेमधन्वा सुमित्रश्च तस्थुः प्रमुखतो रथाः ।।**[3]

पुरोरपत्यं पुमान् तेषां राजा वा इति विग्रहे पुरुशब्दात् **पुरोरण वक्तव्यः**[4] इति वार्तिकेन पुरुशब्दस्य जनपदवाचित्वात्प्राग्दीव्यतीये अणप्रत्यये कृते पुरु + अण्, अनुबन्धलोपे, पुरु+ अ इति स्थिते **ओर्गुणः**[5] इति सूत्रेण उवर्णान्तत्वात् गुणे पुरो + अ इति जाते **एचोऽयवायावः**[6] इति ओकारस्य अवादेशे पुर + अव् + अ इति स्थिते, **तद्धितेष्वचामादेः**[7] इति मित्वादाद्यचो वृद्धौ सत्यां पौरव इति जाते ततः प्रातिपदिकत्वात् सौ, सोः रुत्वे विसर्गे च पौरवः इति रूपं सिद्ध्यति।

भीष्मपर्वणि एकस्मिन् स्थाने **पौरवकः** इति शब्दस्य प्रयोगः दृश्यते, तत्र **संज्ञायां कन्** इति सूत्रेण कन्प्रत्ययः चिन्तनीयः। यथा —

१. ऋ.१०.९०.४ २. दे.भा.१.३.७ ३. उ.प.४.१६
४. वा.२६७९ ५. अष्टा.४.४.१४६ ६. अष्टा.६.१.७८
७. अष्टा.७.२.११७

**पटच्चरैश्च हुण्डैश्च राजन्पौरवकैस्तथा।**
**निषादैः सहितश्चापि पृष्ठमासीयुधिष्ठिर ।।**[१]

**कः पौरवे वसुमती शासतीति**[२] पद्ये स्ववंशनाम्नात्मबोधनेन मयीत्यनुक्त्वा पुरुवंश्यानां रक्षणकल्पविलक्षणत्वं च सूचयति कालिदासः। पुरूवंश्यास्तु महाभारते पुराणादावित्थं वर्णिताः –

**पुरोर्वंश्यं प्रवक्ष्यामि यत्र जातोऽसि भारत।**
**यत्र राजर्षयो वंश्याः ब्रह्मवंश्याश्च जज्ञिरे ।।**[३]

**देशविशेषः ।** यथा मार्कण्डे[४] –

**त्रिनेत्राः पौरवाश्चैव गन्धर्वाच्च द्विजोत्तम।**
**पूर्वोत्तरन्तु कूर्म्मस्य पादमेते समाश्रिता ।।**

**पुरुवंशीयाः** यथा शाकुन्तले प्रथमे अङ्के –

**कः पौरवे वसुमती शासति शासितरि दुर्विनीतानाम्।**
**अयमाचरत्यविनयं मुग्धासु तपस्विकन्यकासु ।।**

श्लोकसन्दर्भाः

| | | | | |
|---|---|---|---|---|
| 5.164.19.a | 6.52.13.b | 6.57.20.a | 6.11.27.a | 6.17.26.a |
| 6.112.15.a | 6.112.16.a | 6.112.22.a | 6.112.23.a | 6.112.25.a |

**४७. पौण्ड्रम्**

**पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः।**
**पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ।।**[५]

---

१. भी.प.६.४६.४७ २. अ.शा.१.२१ ३. भाग.९.२०.१
४. मा.पु.५८.५२ ५. भी.प.१३.१८

पुण्ड्रदेशे भवः इति विग्रहे **तत्र भवः**[१] इति सूत्रेण पुण्ड्रशब्दात् भवार्थे अण्प्रत्यये पुण्ड्र + अण् इति स्थिते अनुबन्धलोपे, पुण्ड्र + अ इति जाते, आद्यचो वृद्धौ सत्यां, भत्वेनाकारलोपे च पौण्ड्र इति रूपम् । ततः प्रातिपदिकत्वात् अमि पूर्वरूपे च **पौण्ड्रम्** इति सिद्धम्। पौण्ड्रनामकं महाशङ्खमित्यर्थः।

**भीमसेनस्य शङ्खः, देशभेदः, सोऽस्य अभिजनस्तस्य राजा वा, तद्देशनृपः** इति शब्दकल्पद्रुमः।[२]

**४८. मैनाकः**

**अन्धकारात्परो राजन्मैनाकं पर्वतोत्तमः।**
**मैनाकात्परतो राजन्गोविदो गिरिरुत्तमः ॥**[३]

मेनकायां भवः इति विग्रहे **तत्र भवः**[४] इति सूत्रेण अण्प्रत्यये कृते मेनका + अण्, अनुबन्धलोपे, मेनका + अ इति जाते, आद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे च मैनाक इति जाते ततः **पृषोदरादीनि यथोपदिष्टम्**[५] इति सूत्रेण मकारोत्तरवर्तिनः अकारस्य मैनाक इति जाते प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **मैनाकः** इति सिद्ध्यति। पर्वतविशेषः ।

स तु हिमालयस्य ज्येष्ठपुत्रः । यथा –

**ततो भगवती प्राह मेनका गुनिसन्निमाम्।**
**स्मितपूर्वं तदा तस्याः पश्यन्ती मनोरथम् ॥**[६]

**दानवविशेषः** इति हरिवंशे भविष्यपर्वणि।[७]

---

१. अष्टा.४.३.५३ २. श.क.द्रु.भा.३,पृ.२३८ ३. भी.प.७.४०

४. अष्टा.४.३.५३ ५. अष्टा.६.३.१०९ ६. श.क.द्रु.भा.७८९,

७. ह.वं.२३२.३

**श्लोकसन्दर्भा:**

6.13.18.a 6.13.18.b 6.43.64.b 6.45.19.b 6.88.23.c

**४९ पाञ्चालक:**

**तत आसादयामास पुरोधा द्रुपदं पुरे।**
**तस्मै पाञ्चालको राजा गामर्घ्यं च सुसत्कृतम्।**
**प्रापयामास राजेन्द्र सह तेन शिखण्डिन ।।**[१]

पञ्चालेषु भव: इति विग्रहे पञ्चालशब्दात् **जनपदतदवध्योश्च**[२] इति सुत्रेण जनपदवाचिनस्तदवधिवाचिन वुञ्प्रत्यये पञ्चाल + वुञ् इति स्थिते, अनुबन्धलोपे, पञ्चाल + वुञित्वादाद्यचो वृद्धौ कृतायां भत्वेनाकारलोपे च कृते पाञ्चाल + वु इति जाते **युवोरनाकौ**[३] इति वुस्थाने अकादेशे पाञ्चालक इति जाते, तत: प्रातिपदिकत्वेन सौ, रुत्वे विगर्से च **पाञ्चालक:** इति रूपं सिद्ध्यति । द्रुपद: इत्यर्थ:।

पञ्चालो नाम जनपदविशेष: तस्मिन्नवधौ भव: इत्यर्थ: । यथा बालमनोरमायां – **त्रैगर्तो नाम जनपदविशेषस्यावधि:। आदर्शो नाम जनपद:। तत्र भव इत्यर्थ: ।**

**५०. मारुत:**

**विश्वावसुर्नारदश्च गन्धर्वाप्सरसां गणा:।**
**ऋतव: षट्च देवेन्द्रं मूर्तिमन्त उपस्थिता:।**
**मारुत: सुरभिर्वाति मनोज्ञ: सुखशीतल: ।।**[४]

मरुच्छब्दात् स्वार्थे **प्रज्ञादिभ्यश्च**[५] इति सूत्रेण मरुच्छब्दस्य प्रज्ञादिगणे

१. उ.प.१९३.१६ २. अष्टा.४.१.१६६ ३. अष्टा.७.१.१

४. उ.प.११.१२ ५. अष्टा.५.४.३८

पठितत्वात् अण्प्रत्यये कृते मरुत् + अण् इति स्थिते, अनुबन्धलोपे, मरुत् + अ, णित्वादाद्यचो वृद्धौ कृतायां **मारुत** इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च मारुतः इति सिद्ध्यति। वायुः इत्यर्थः।

**वायुः** इत्यमरः।[१] यथा – **समीरमारुतमरुज्जगत्प्राणसमीरणः** इति।

**जनपदविशेषः** इति शब्दकल्पद्रुमः।[२]

यथा महाभारते –

**मडका लडकाश्चैव तङ्गणाः परतङ्गणाः।**
**बाल्हिकास्तित्तिराच्चैव चोलाः पाण्ड्याश्च भारत ॥**[३]

मरुत सम्बन्धिनि, यथा ऋग्वेदे[४] – **रासि क्षये रासि मित्रमम्मे रासि शर्ध इन्द्र तं नः।** तद्भाष्ये सायणः – **मारुतं मरुतां देवविशां सम्बन्धि** इति ।

**श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.104.13.b | 5.135.29.b | 5.140.6.b | 5.167.7. b | 5.176.15.b |
| 5.179.16.b | 5.181.18.b | 5.183.26.b | 6.24.23.b | 6.68.27.b |
| 6.92.13.b | 6.96.7.b | 6.96.21.b | 6.98.17.a | 6.112.62.b |
| 6.112.132.a | 6.112.133.b | 6.114.5.a | 6.23.1.b | 6.58.2.a |
| 6.58.3.b | 6.58.4.b | 6.58.6.b | 6.79.3.a | 6.101.26.a |

**५१. पाराशर्यः**

**नमस्कृत्वा पितुस्तेऽहं पाराशर्याय धीमते।**
**यस्य प्रसादाद्दिव्यं मे प्राप्तं ज्ञानमनुत्तमम् ॥**[५]

पराशरस्यापत्यमिति विग्रहे पराशरशब्दात् **ऋष्यन्धकवृष्णिकुरुभ्यश्च**[६]

---

१. अ.को.१.३७ २. श.क.द्रु.भा.३,पृ.७०२ ३. महा.६.४६.४९
४. ऋ.२.११.१४ ५. भी.प.१६.७ ६. अष्टा.४.१.११४

इति प्राप्तमणं बाधित्वा **गर्गादिभ्यो यञ्**[1] इति सूत्रेण पराशरशब्दस्य गर्गादिगणे पठितत्वात् यञ्प्रत्यये, पराशर + यञ् इति स्थिते, अनुबन्धलोपे पराशर + य इति जाते, ञित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे पाराशर्य इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च कृते **पाराशर्यः** इति सिद्ध्यति । व्यासः इत्यर्थः।

यथा देवीभागवते[2] – **पाराशर्य ! महाभाग ! यत्त्वं पृच्छसि मामिह।**

श्लोकसन्दर्भाः

5.104.13.b 5.135.29.b 5.140.6.b 5.167.7.0 5.176.15.b

**५२. प्रावरकः**

**मनोनुगात्परश्चोष्णो देशः कुरुकुलोद्वह।**
**उष्णात्परः प्रावरकः प्रावरादन्धकारक ।।**[3]

प्रवरकानां निवासो देश इति विग्रहे प्रवरकशब्दात् **तस्य निवासः**[4] इति सूत्रेण अण्प्रत्यये कृते प्रवर + अण, अनुबन्धलोपे, प्रवर । अ इति जाते, णित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे कृते प्रावर इति जाते **संज्ञायां कन्**[5] इति कन्प्रत्यये, प्रावर । कन् इति जाते अनुबन्धलोपे, प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **प्रावरकः** इति सिद्ध्यति। प्रावरकः देशविशेषः इत्यर्थः।।

प्रावरशब्दविषये[6] शब्दकल्पद्रुमे यथा–**प्राद्रियते गात्रमनेनेति ।** उत्तरासङ्गः इति।

**उत्तरीयवस्त्रम्** इत्यमरः।[7]

**अन्तरीयोपसंव्यानपरिधानान्यधोंशुके।**
**द्वौ प्रावरोत्तरासङ्गौ समौ बृहतिका तथा ।।**

१. अष्टा.४.१.१०५ २. दे.भा.४.१.१०५ ३. भी.प.१३.२१ ४. अष्टा.४.२.६९
५. अष्टा.५.३.८७ ६. श.क.द्रु.भा.३.पृ.३६३ ७. अ.को.२.१.२७

## ५३. रैवतक:

**उच्चौर्गिरी रैवतको यत्र नित्यं प्रतिष्ठित:।**
**रेवती दिवि नक्षत्रं पितामहकृतो विधि: ।।**[१]

रेवत्या अदूरो भव इति विग्रहे **अदूरभवश्च**[२] इति अण्प्रत्यये रेवती + अण् इति जाते, अनुबन्धलोपे रेवति + अ, आद्यचो वृद्धौ कृतायां भत्वेनेकारलोपे रैवत इति जाते, स्वार्थे **संज्ञायां कन्** इति कन्प्रत्यये रैवत + कन् इति जाते, अनुबन्धलोपे, प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **रैवतक:** इति सिद्ध्यति। पर्वतविशेष: इत्यर्थ:।

**पर्वत:** तत्पर्याय इति शब्दकल्पद्रुम:।[३]

रेवती नाम काचित् नदी। यथा देवीपुराणे[४] –

**रेवा तु नर्मदा देवी नदी वा रेवती माता।**
**अतिखण्डनवन्वा वा लोके देवी प्रकीर्तिता ।।**

''शैलभेद:'' इति मेदिनी।[५] यथा – **रैवतस्तु सुवर्णालौ शैलभेदे च शङ्करे ।**

''मेघ:'' इति निघण्टु:।[६] ''सोमलताविशेष:'' इति सुश्रुते (४.२९), यथा – **अग्निष्टोमो रैवतच्च यथोक्त इति संज्ञित:।** (अदूरभव: नाम न दूरम् = अदूरम्, तत्र भव इत्यर्थ:।) अर्थात् रेवतीनद्या: पार्श्वस्थपर्वत:।

---

१. भी.प.१२.१६ २. अष्टा.४.२.७० ३. श.क.द्रु.भा.४,पृ.१८१
४. दे.पु.अ.४५ ५. मे.को.५.४.१४६ ६. निघन्टु:१.१०

**५४. धानुष्कः**

**अश्वेऽश्वे दश धानुष्का धानुष्के दश चर्मिणः।**
**एवं व्यूढान्यनीकानि भीष्मेण तव भारत ॥**[१]

धनुषा जीवतीति विग्रहे **वेतनादिभ्यो जीवति**[२] इति सूत्रेण धनुषिति शब्दात् ठक्प्रत्यये धनुष् + ठक् इति स्थिते, अनुबन्धलोपे धनुष् + ठ इति जाते, **इसुसुक्तान्तात्कः**[३] इति उसन्तत्वात् ठस्य कादेशे धनुष् + क इति जाते, कित्वात् **किति च**[४] इति आद्यचो वृद्धौ कृतायां धानुष्क इति रूपम्। ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **धानुष्कः** इति सिद्धम्। धनुः चालयित्वा यः जीविकां यापयति सः धानुष्कः, सैनिकः इत्यर्थः।

**धनुर्धरः** इत्यमरः।[५] यथा –

**पदश्च पदिकश्चाथ पादातं पत्तिसंहतिः।**
**धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः ॥**

**श्लोकसन्दर्भाः**

6.77.14.b

**५५. पाशुपतम्**

**समाददानः पृथगस्त्रमार्गान्यथाग्निरिद्धो गहनं निदाघे।**
**स्थूणाकर्ण पाशुपतं च घोरं तथा ब्रह्मास्त्रं यच्च शक्रो विवेद ॥**[६]

पशुपतिर्देवतास्येति विग्रहे पशुपतिशब्दात् **सास्य देवता**[७] इति सूत्रेण अण्प्रत्यये पशुपति + अण् इति स्थिते, अनुबन्धलोपे पशुपति । अ इति जाते,

१. भी.प.२०.१७ २. अष्टा.४.४.१२ ३. अष्टा.७.३.५१
४. अष्टा.७.२.११८ ५. अ.को.२.१९६ ६. उ.प.४७.१००
७. अष्टा.४.२.२४

आद्यचो वृद्धौ सत्यां भत्वादिकारलोपे च पाशुपत इति जाते ततः सौ, अमादेशे पूर्वरूपे च **पाशुपतम्** इति सिध्यति । शस्त्रविशेषः इत्यर्थः।

पशुपतेः शूलास्त्रम्।[1] तस्य स्वरूपं यथा देवीपुराणे[2] –

**गजाननोऽपि सञ्चिन्त्य यत्तत् पाशुपतं परम्।**
**महारूपं महाकायं युगान्ताग्निसमप्रभम्।।**
**पञ्चवक्रं महाघोरं दशबाहुं त्रिलोचनम्।।**
**सौम्यं घोरं सुघोरास्यमूर्धकेशं भयोत्कटम्।।**
**जटाभारेन्द्रगङ्गाहि ध्रियमाणं शिवाजम्।**
**वेणुवीणाशङ्खघण्टं डमरूकारावसङ्कुलम्।।**
**शिवारावं भयात्नासि गृधवायसत्तेष्टितम्।**
**उल्कादण्डज्वलज्वालं गोनाशकृतभूषणम्।।**
**ललन्मेखलनागेन्द्रं गजचर्दिवाससम्।**
**केकरं तर्जमानन्तु शूलाखदाङ्गधारिणम्।।**
**ग्रसमानं सममिदं त्रैलोक्यं सचराचरम्।**
**पुरतो विघ्ननाशस्य लेलिहानं व्यवस्थितम् ।**

**बकपुष्पम्** इति शब्दकल्पद्रुमः।[3]

**पशुपत्यधिदैवतः** तद्भक्तः इति मेदिनी[4], यथा –

**पाशुपतो बकपुष्पे स्यात् पशुपत्यधिदैवते च तद्भक्ते।**
**पारिजातः सुरतरौ पारिभद्रतरावपि ।।**

**श्लोकसन्दर्भाः**

5.139.31.a 6.116.38.b

१. शा.क.द्रु.भा.३.पृ.१३४ २. दे.पु. ३. शा.क.द्रु.भा.३.पृ.१३३ ४. मे.को.७०.२१३

### ५६. पृषत्कः

**नव चापि पृषत्काणां शतानि नतपर्वणाम्।**
**प्राहिण्वं कङ्कपत्राणां जामदग्न्यरथं प्रति ।।**[१]

पृष्यते सिच्यते क्षिप्यते[२] इति विग्रहे पृषत्शब्दात् **संज्ञायां कन्**[३] इति सूत्रेण ह्रस्वार्थे कन्प्रत्यये पृषत् + कन् इति जाते, अनुबन्धलोपे पृषत् + क इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **पृषत्कः** इति सिद्ध्यति। बाणः, लघुबाणो वा इत्यर्थः ।

**बाणः** इत्यमरः[४] । यथा रघौ[५] –

**अप्यर्धभागे परबाणलूना धनुर्भृतां हस्तवतां पृषत्काः ।।**

**श्लोकसन्दर्भाः**

6.15.24.a 6.54.15.b 6.81.10.b

### ५७. कर्णी

**कर्णिनालीकनाराचा निर्हरन्ति शरीरतः।**
**वाक्शल्यस्तु न निर्हर्तुं शल्यो हृदिशयो हि सः ।।**[६]

कर्णौ इव पक्षौ स्तः[७] यस्य इति विग्रहे कर्णशब्दात् **तुन्दादिभ्यः इलच्च**[८] इति सूत्रपठितेन **स्वाङ्गादिवृद्धौ** इति गणसूत्रेण मत्वर्थे इनिप्रत्यये अनुबन्धलोपे, कर्ण इन् इति जाते. कर्णिन इति जाते, ततः प्रातिपदिकत्वेन सौ, शब्दाधिकारप्रक्रियायां **कर्णी** इति सिध्यति। बाणविशेष इत्यर्थः।

**बाणविशेष** इति शब्दकल्पद्रुमः।[९]

---

१. उ.प.१८०.२८ २. शा.क.द्रु.भा.३,पृ.१३३ ३. अष्टा.५.३.८७
४. अ.को.२.८.८६ ५. रघु.वं.७.४५ ६. उ.प.३४.७६
७. शा.क.द्रु.भा.२,पृ.४३ ८. अष्टा.५.२.११७ ९. शा.क.द्रु.भा.२,पृ.४३

यथा विष्णुपुराणे[१]—

**करोति कर्णिनो यत्तु यस्तु खड्गादिकृन्न।**
**प्रयान्ति ते विशसने नरके भृशदारुणे ।।**

**वर्षपर्वतसप्तकान्तर्गतपर्वतविशेषः** इति शब्दकल्पद्रमः।[२] कर्णौ पक्षौ स्तः अस्य। पुरा किल पर्वतानां पक्षाः आसन् इति पौराणिकी गाथा।

श्लोकसन्दर्भाः

5.51.3.a 5.139.38.a 6.91.30.a 6.102.11.b

**५८. शाद्वला**

**प्रभूतरक्षोगणभूतसेविता**
**शिरः कपालाकुलकेशशाद्वला।**
**शरीरसङ्घातसहस्रवाहिनी**
**विशीर्णनानाकवचोर्मिसङ्कला ।।**[३]

शादो नवतृणं विद्यतेऽति[४] विग्रहे शादशब्दात् **नडशादाद् ड्वलच्**[५] इति ड्वलच्प्रत्यये शाद + ड्वलच्, अनुबन्धलोपे, शाद + वल इति जाते, **डित्वसामर्थ्यादभस्यापि अनुधकरणसामर्थ्यात्**[६] इति टिलोपे कृते शाद्वल इति जाते ततः स्त्रियां टापि **शाद्वला** इति रूपं सिद्धम्।

**शालितृणैर्हरिते** देशे इत्यमरे माहेश्वर्यां टीकायाम्।[७]

शष्पवाचिन एव शादशब्दाद्वलः स्यात्, न तु पङ्कवाचिनोऽनभिधानात्। यथा रामायणे—

१. वि.पु.२.६.१६ २. शा.क.द्रु.भा.४,पृ.४ ३. भी.प.५५.१२३
४. शा.क.द्रु.भा.५,पृ.४६ ५. अष्टा.४.२.८८ ६. महा.वा.६.४.१४३
७. अ.को.संक्षिप्तमाहेश्वर्या टीकायाम् ।

**शाद्वलेषु यदा शिष्ये वनान्ते वनगोचरा।**
**कुथास्तरणयुक्तेषु किं स्यात् सुखतरं ततः ॥**[1]

शादशब्दविषये मेदिनीकोशे[2] यथा – **शादः स्यात्कर्दमे शष्पे स्वादुमिष्टमनो ज्ञयोः** इति।

**श्लोकसन्दर्भाः**

6.89.25.b 6.99.34.a

**५९. वैष्णवम्**

**अग्निरेष महार्चिष्माज्जागर्ति वरुणह्रदे।**
**वैष्णवं चक्रमाविद्धं विधूमेन हविष्मता ॥**[3]

विष्णोरिदमिति विग्रहे विष्णुशब्दात् **तस्येदम्**[4] इति सूत्रेण अण्प्रत्यये कृते विष्णु + अण् इति स्थिते अनुबन्धलोपे विष्णु + अ इति जाते, **ओर्गुणः**[5] इति उवर्णान्तत्वात् भस्य गुणे विष्णोः अ इति जाते, **एचोऽयवायावः**[6] इति अचि परत अवादेशे कृते विष्ण + अव अ इति जाते **तद्धितेष्वचामादेः**[7] इति आद्यचो वृद्धौ सत्यां वैष्णव इति जाते ततः प्रातिपदिकत्वात् सौ, अमादेशे पूर्वरूपे च **वैष्णवम्** इति रूपं सिद्ध्यति। प्रकृते विष्णोः सुदर्शनचक्रमित्यर्थः।

**विष्णुसम्बन्धिनि, विष्णुमन्त्रोपासकः, विष्णुभक्तः तत्पर्यायः कार्ष्णः, हारः** इति शब्दकल्पद्रुमः।[8]

**श्लोकसन्दर्भाः**

5.96.18.b 5.155.6.a 6.116.38.a

१. रामा.२.३०.१४ २. मे.को.४५.१५ ३. उ.प.९६.१८
४. अष्टा.४.१.९२ ५. अष्टा.६.४.१४६ ६. अष्टा.६.१.७८
७. अष्टा.७.२.११७ ८. शा.क.द्रु.भा.४.पृ.५३४

### ६०. गुह्यकः

गुह्यकः इति शब्दस्य महाभारतस्थोद्योगभीष्मपर्वणोः त्रयः अर्थाः स्वीकृताः। तत्र प्रथमः — **गुह्यकम्** —

**ततोऽहमस्त्रं वायव्यं जामदग्न्ये प्रयुक्तवान्।**
**प्रत्याजघ्ने च तद्रामो गुह्यकास्त्रेण भारत ॥**[१]

गोपनीयरूपेण चलति इति विग्रहे **दण्डादिभ्यो यत्**[२] इति सूत्रेण गुहाशब्दस्य दण्डादिगणे पठितत्वात् यत्प्रत्यये कृते गुहा + यत् इति जाते अनुबन्धलोपे, गुहा + य इति जाते भत्वेनाकारलोपे च गुह्य इति जाते ततः **संज्ञायां कन्** इति कन्प्रत्यये अनुबन्धलोपेच गुह्यक इति जाते, ततः प्रातिपदिकत्वात् सौ, अमादेशे, पूर्वरूपे च **गुह्यकम्** इति रूपं सिद्ध्यति। अस्त्रविशेष इत्यर्थः।

द्वितीयः —

**अशक्यमिति सा यक्षं पुनः पुनरुवाच ह।**
**करिष्यामीति चैनां स प्रत्युवाचाथ गुह्यकः ॥**[३]

गुहति निधिं धनविशेष रक्षतीति[४] विग्रहे गुहाशब्दात् **दण्डादिभ्यो यत्**[५] इति सूत्रेण यत् प्रत्यये कृते गुह्य + यत्, प्रक्रिया पूर्ववत्।

देवयोनिविशेषः। स तु कुबेरानुचरः निधिरक्षको मणिभद्रादियक्षभेदः।

शब्दकल्पद्रुमे[६] यथा —

**निधिं रक्षन्ति ये यक्षास्ते स्युगुह्यकसंज्ञकाः।**
**गुहां कुत्सितं कायति शब्दायते प्रकाशयति वा ॥**

---

१. उ.प.१८१.११ २. अष्टा.५.१.६६ ३. उ.प.१९२.२४
४. शा.क.द्रु.भा.२,पृ.३४४ ५. अष्टा.५.१.६६ ६. शा.क.द्रु.भा.२,पृ.३४४

कै। कः। यद्वा गुह्यं गोप्यं कं सुखं यस्य। **शंसिदुहिगुहिभ्योवेति** काशिकोक्ते क्यप् वा इति शब्दकल्पद्रुमः।

**श्लोकसन्दर्भाः**

5.192.30.b 5.193.41

तृतीयः –

**गन्धमादनशृङ्गेषु कुबेरः सह राक्षसैः।**
**संवृतोऽप्यरसां सघैर्मोदन्ते गुह्यकाधिपः ।।**[१]

गुह्यकानां राजा तस्यापत्यं वा इत्यर्थे **जनपदशब्दात्क्षत्रियादञ्**[२] इति सूत्रेण अञ्प्रत्यये कते गुह्यक + अञ् इति स्थिते **जनपदे लुप्**[३] इति सूत्रेण जनपदे वाच्ये तद्धितप्रत्ययस्य लुपि कृते गुह्य इति जाते ततः प्रातिपदिकत्वेन सौ, रुत्वे विसर्गे च **गुह्यकः** इति रूपं सिद्धम्। गुह्यकदेशीयः इत्यर्थः।

चतुर्थः –

यद्वा गुह्यात् सृष्टि चिकीर्षोः परब्रह्मणः कृष्णस्य गुह्यदेशात् कायति आविर्भवतीति इति शब्दकल्पद्रुमः।[४] यथा ब्रह्मवैवर्ते ब्रह्मखण्डे (१५.८०) –

**आविर्बभूव कृष्णस्य गुह्यदेशात्ततः परम्।**
**पिङ्गलश्च पुमानेकः पिङ्गलैश्च गणैस्सह ।।**
**आविर्भूता यतो गुह्यात् तेन ते गुह्यका स्मृताः ।।**

**श्लोकसन्दर्भाः**

6.7.48.b 6.7.38.b

---

१. भी.प.७.३२ २. अष्टा.४.१.१६६ ३. अष्टा.४.२.८१

४. शा.क.द्रु.भा.२.पृ.३४४

**६१. कौशल्यः**

**श्रुतायुधश्च कालिङ्गो जयत्सेनश्च पार्थिवः।**
**बृहद्बलश्च कौशल्यः कृतवर्मा च सात्वतः ॥**[१]

कोशलस्यापत्यं राजा वा इति विग्रहे कोशलशब्दात् **वृद्धत्कोसलाजादाञ्ञ्यङ्**[२] इति सूत्रेण अपत्यार्थे ञ्यङ्प्रत्यये कृते कोशल + ञ्यङ् इति स्थिते, अनुबन्धलोपे, कोशल + य इति जाते, ञित्वादाद्यचो वृद्धौ कृतायां भत्वेनाकारलोपे कौशल्य इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **कौशल्यः** इति रूपं सिद्ध्यति। बृहद्बल इत्यर्थः ।

कोशलः नाम **अयोध्यानगरी** इति शब्दकल्पद्रुमः।[३]

यथा रामायणे[४] —

**कोशलो नाम मुदितः स्फीतो जनपदो महान्।**
**निविष्टः सरयूतीरे प्रभूतधनधान्यवान्।**

**६२. कुरुः**

**कृत्वा विवाहं तु कुरुप्रवीराः**
**तदाभिमन्योर्मुदितस्वपक्षा।**
**विश्रम्य चत्वार्युषसः प्रतीताः**
**सभां विराटस्य ततोऽभिजग्मुः ॥**[५]

कुरूणामपत्यं राजा वा इति विग्रहे कुरुशब्दात् **कुरुनादिभ्यो ण्यः**[६] इति सूत्रेण जनपदवाचकात्, अपत्ये क्षत्रियवाचकाद्वा ण्यप्रत्यये कुरु + ण्य इति स्थिते,

१. भी.प.१६.३४ २. अष्टा.४.१.१७१ ३. शा.क.द्रु.भा.२,पृ.२०९
४. रामा.१.५.५ ५. उ.प.१.१ ६. अष्टा.४.१.१७२

**ते तद्राजा:**[१] इति ण्यप्रत्ययस्य तद्राजसंज्ञायां **तद्राजस्य बहुषु तेनैवास्त्रियाम्**[२] इति ण्यप्रत्ययस्य लुकि कृते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **कुरुः** इति रूपं सिद्ध्यति।

कुरु इति शब्दस्य प्रयोगः व्यासेन उद्योगभीष्मपर्वणोः द्विशताधिकसप्तपञ्चाशद्वार कृतः। तत्र पृथक् पृथक् अर्थाः स्वीकृताः व्यासेन । यथा – दुर्योधनः, कौरवः, भीष्मः, कुरुदेशीयाः इत्यादयः।

[३]शब्दकल्पद्रुमे कुरुविषये यथा – आग्नीध्रराजपुत्रः। स तु प्रियव्रतराजपौत्रः । वैवस्वतमनुवंश्यश्चन्द्रवंशीयराजविशेषः। स तु सम्बरणराजभार्यायां सूर्यकन्यायां तापस्यां जातः। अयमेव कुरुक्षेत्रपतिः धार्तराष्ट्रपाण्डवानां पूर्वपुरुषः। यथा –

**योऽजमीढसुतेष्वन्य ऋक्षुः सम्बरणस्ततः।**
**तपस्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरूः।**
**परीक्षित् सधनुर्जर्निब्धाश्वः कुरोः सुताः ।।**[४]

**भक्तम्, देशविशेषः** इति मेदिनी।[५] यथा – **कुरूर्नृपान्तरे भक्ते पुमान् पुंभूम्नि नीवृति।**

यत्र कुरुशब्दस्य प्रयोगः ''कुरुदेशवासी'' इत्यस्मिन्नर्थे भवति, तत्र बहुवचनान्तप्रयोगः। यथा गीतायाम् (१.२५) – **उवाच पार्थ ! पश्यैतान् समवेतान् कुरूनिति।**

पदस्यास्य श्लोकसन्दर्भाः आधिक्यात् तत्र तत्र द्रष्टव्याः।

---

१. अष्टा.४.१.१७४ २. अष्टा.२.४.६२ ३. शा.क.द्रु.भा.२,पृ.१५१
४. भाग.९.२२.८ ५. मे.को.१२४.१६

६३. फाल्गुनिः

**कौसल्यस्य पुनश्चापि धनुश्चिच्छेद फाल्गुनिः।**
**आजघान शरैश्चैव त्रिंशता कङ्कपत्रिभिः ॥**[१]

फल्गुनस्यापत्यमिति विग्रहे फल्गुनशब्दात् **अत इञ्**[२] इति सूत्रेण षष्ठ्यन्तात्ददन्ताप्रातिपदिकात् इञ्प्रत्यये कृते फल्गुन + इञ् इति स्थिते अनुबन्धलोपे फल्गुन + इ इति जाते, ञित्वादाद्यचो वृद्धौ कृतायां, भत्वेनाकारलोपे फाल्गुनि इति जाते ततः प्रातिपदिकत्वात् सो. रुत्वे विसर्गे च फाल्गुनिः इति रूपं सिद्ध्यति। फल्गुनः नाम अर्जुनः। अर्जुनस्य पुत्र इरावान् इत्यर्थः।

**श्लोकसन्दर्भाः**

6.96.5.b  6.96.6.b  6.97.10.c  6.112.32.a  6.97.26.b

६४. कैकेयः

**बृहत्क्षत्रं तु कैकेयं कृपः शारद्वतो ययौ।**
**तं कृपः शरवर्षेण छादयामास भारत ॥**[३]

केकयस्यापत्यम् इति विग्रहे केकयशब्दात् **जनपदशब्दात् क्षत्रियादञ्**[४] इति सूत्रेण क्षत्रियवाचित्वात् अञ्प्रत्यये केकेय + अञ् इति स्थिते अनुबन्धलोपे केकेय + अ इति जाते, आद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे च कृते कैकय इति जाते, **केकयमित्रयुप्रलयानां यादेरियः**[५] इति य स्थाने इयादेशे, कैक + इय् + अइति दशायाम् **आद्गुणः**[६] इति गुणे कैकेय इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **कैकेयः** इति रूपं सिद्ध्यति। बृहत्क्षत्र इत्यर्थः।

---

१. भी.प.११२.३२  २. अष्टा.४.१.१२२  ३. भी.प.४३.४९
४. अष्टा.४.१.१६६  ५. अष्टा.७.३.२  ६. अष्टा.६.१.८७

**श्लोकसन्दर्भाः**

6.52.4.b 6.65.11.a

**६५. ऐरावतः**

**ततः शक्रः स्तूयमानो गन्धर्वाप्सरसां गणैः।**
**ऐरावतं समारुह्य द्विपेन्द्रं लक्षणैर्युतम् ॥**[१]

इरा = जलानि विद्यन्तेऽस्मिन् इति इरावान् (समुद्रः) **(तदस्यास्त्यस्मिन्निति मतुप्**[२]**)** विगहे इरावच्छब्दात् भवार्थ **तत्र भवः**[३] इति सूत्रेण अण्प्रत्यये इरावत अण्, अनुबन्धलोपे इरावत् + अ इति जाते, णित्वादाद्यचो वृद्धौ सत्याम् ऐरावत इति जाते ततः प्रातिपदिकत्वात् अम् प्रत्यये पूर्वरूपे **ऐरावतम्** इति रूपं सिद्धम्। इन्द्रस्य हस्ती इत्यर्थः।

[४]शब्दकल्पद्रुमे यथा – **इन्द्रहस्ती। स तु शुक्लवर्ण चतुर्दन्तः। समुद्रमथनोत्थितः पूर्वदिग्गजञ्च। तत्पर्यायः।**

**अभ्रमातङ्गः ऐरावणः अभ्रमुवल्लभ** इत्यमरः।[५] यथा – **ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः** इति।

आप्टे यथा – **इन्द्रकुञ्जरः, श्रेष्ठहस्ती।**[६]

**लकुचवृक्षः, नागभेदः** इति मेदिनी।[७] यथा – **ऐरावतोऽभ्रमातङ्गे नारङ्गेलकुचन्द्रुमे।**

उद्योगपर्वण्यपि चतुर्षु स्थलेषु ऐरावतः इति शब्देन **नागविशेषस्यैव** ग्रहणं कृतम्। अत्र इरावतः कुले जातः इति विग्रहे **तत्र जातः**[८] इति सूत्रेण अण्प्रत्ययः।

१. उ.प.१८.१ २. अष्टा.५.२.९४ ३. अष्टा.४.३.५३
४. शा.क.द्रु.भा.१,पृ.३३९ ५. अ.को.१.३० ६. वा.शिआ.को.पृ.२६९
७. मे.को.६८१९२ ८. अष्टा.४.३.२५

शेषप्रक्रिया पूर्ववत्। यथा

**आर्यको नन्दकश्चैव तथा कलशपोतकौ।**
**कैलासकः पिञ्जरको नागश्चैरावतस्तथा।**[1]

अन्यत्रापि –

**ऐरावतकुले जातः सुमुखो नाम नागराट्।**[2]

**बहुमानाच्च भवतस्तथैवैरावतस्य च।**[3]

**तक्षकेण च नागेन तथैवैरावतेन च।**[4]

भीष्मपर्वणि स्थलद्वये **ऐरावत** इति शब्देन ऐरावतनामकवर्षस्य ग्रहणमस्ति। यथा

**वर्षमैरावतं नाम ततः शृङ्गवतः परम्।**[5]
**वर्षमैरावतं नाम तस्माच्छृङ्गवतः परम्।**[6]

परन्तु कोशग्रन्थेषु कुत्रापि ऐरावतः इत्यनेन ऐरावतनामकवर्षस्य ग्रहणं न दृश्यते।

**इन्द्रहस्तिविषयकश्लोकसन्दर्भाः**

5.97.5.a 5.97.7.a 5.164.38.b 6.13.33.b 6.32.7.b
6.60.50.a 6.86.7.a 6.91.3.b .

## ६६. ऐन्द्रम्

महाभारतस्योद्योगभीष्मपर्वणोः **ऐन्द्रम्** इति शब्दस्य त्रयः अर्थाः स्वीकृता व्यासेन। एकः शस्त्रविशेषः। यथा –

१. उ.प.१०१.११ २. उ.प.१०१.२३ ३. उ.प.१०२.१०
४. उ.प.१०७.१९ ५. भी.प.७.३५ ६. भी.प.९.१०

**ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं च माधव।**
**मन्त्रास्तत्र भविष्यन्ति प्रयुक्ताः सव्यसाचिना ॥**[१]

इन्द्रो देवता अस्येति विग्रहे इन्द्रशब्दात् **सास्य देवता**[२] इति सूत्रेण अण्प्रत्यये इन्द्र + अण्, अनुबन्धलोपे इन्द्र + अ इति जाते, आद्यचो वृद्धौ कृतायां, भत्वेनाकारलोपे ऐन्द्र इति जाते. ततः प्रातिपदिकत्वेन सौ, सोरमि पूर्वरूपे च **ऐन्द्रम्** इति रूपं सिद्ध्यति। अस्त्रविशेष इत्यर्थः।

**श्लोकसन्दर्भाः**

5.140.6.b 6.55.120.b 6.78.39.a 6.116.38.b

द्वितीयः —

**श्यामो ग्रहः प्रज्वलितः सधूमः सहपावकः ।**
**ऐन्द्र तेजस्वी नक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति ॥**[३]

अत्रापि इन्द्रो देवतास्येति विग्रहे इन्द्रशब्दात् **सास्य देवता**[४] इति अण्प्रत्ययः, प्रक्रिया पूर्ववत्। ज्येष्ठानक्षत्रमित्यर्थः।

[५]शब्दकल्पद्रुमेऽपि — ज्येष्ठानक्षत्रम्। मूलविशेषः। तत्पर्य्यायः — वनार्द्रका, वनजा, अरण्यजार्द्रका । अस्य गुणाः यथा — कटुत्वम्, अम्लत्वम्, रुचिबलाग्निकारित्वञ्च इति।

तृतीयः —

**ऐन्द्रं स प्रार्थयत्स्थानं विश्वरूपो महाद्युतिः।**
**तैस्त्रिभिर्वदनैर्घोरैः सूर्येन्दुज्वलनोपमैः ॥**[६]

१. उ.प.१३९.३१ २. अष्टा.४.२.२४ ३. भी.प.३.१५
४. अष्टा.४.२.२४ ५. शा.क.द्रु.भा.१.पृ.३१८ ६. उ.प.९.४

अत्र इन्द्रस्येदम् इति विग्रहे **तस्येदम्**[१] इति सूत्रेण अण्प्रत्ययः, प्रक्रिया पूर्ववत्।

**श्लोकसन्दर्भाः**

5.9.4.a – इन्द्रस्य स्थानमित्यर्थः। 5.16.32.b – इन्द्रस्य भाग इत्यर्थः।

**६७. पारमेष्ठ्यम्**

**आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम्।**
**ऐन्द्रं पाशुपतं ब्राह्मं पारमेष्ठ्यं प्रजापतेः।**
**धातुस्त्वष्टुश्च सवितुर्दिव्यान्यस्त्राणि सर्वशः ।।**[२]

परमेष्ठिनः परमेष्ठिन् + ष्यञ् इति स्थिते अनुबन्धलोपे कृते परमेष्ठिन् + य इति जाते, ञित्वादाद्यचो वृद्धौ सत्यां **नस्तद्धिते**[३] इति टिलोपे (इन् इत्यस्य लोपे) पारमेष्ठ्य इति जाते, ततः प्रातपदिकत्वात् सौ, सोरमि पूर्वरूपे च **पारमेष्ठ्यम्** इति रूपं सिद्ध्यति। अस्त्रविशेष इत्यर्थः । अयं ष्यञ्प्रत्ययः भावे कर्मणि वा प्रयुक्तः। प्रकृते विवक्षितः अर्थस्तु अस्त्राख्यः। अतः अस्मिन् अस्त्रार्थे ष्यञ्प्रत्ययः कथं वा प्रवर्तेत इत्यत्र विबुधाः प्रमाणम्।

**६८. सव्यसाची**

**स ह्येवैकः पृथिवीं सव्यसाची**
**गाण्डीवधन्वा प्रणुदेद्रथस्थः।**
**तथा विष्णुः केशवोऽप्यप्रधृष्यो**
**लोकत्रयस्याधिपतिर्महात्मा ।।**[४]

---

१. अष्टा.४.१.९२ २. भी.प.११६.३८ ३. अष्टा.६.४.१४४

४. उ.प.२२.१०

सव्येन वामेन हस्तेनापि सचते सन्दधाति बाणमिति विग्रहे सव्यसाचशब्दात् मतुबर्थे **अत इनिठनौ**[१] इति इनिप्रत्यये सव्यसाच + इनि इति स्थिते, अनुबन्धलोपे **यस्येति च**[२] इत्यलोपे सव्यसाचिन् इति जाते, तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां सुप्रत्यये **सौ च**[३] इति सूत्रेण उपधायाः दीर्घ, हल्ङ्यादिलोपे, प्रत्ययलक्षणेन पदसंज्ञायां **नलोपः प्रातिपदिकान्तस्य**[४] इति नकारलोपे **सव्यसाची** इति रूपं सिद्ध्यति।

अर्जुनस्य विशेषणम् । यतो हि अर्जुनः उभाभ्यां हस्ताभ्यां बाणं सन्दधाति स्म।

यथा महाभारते[५] –

**उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे।**
**तेन देवमनुष्येषु सव्यसाचीति मां विदुः**

**श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.22.1.a | 5.22.13.a | 5.47.61.b | 5.51.16.a | 5 .53.2.b |
| 5.54.56.a | 5.56.30.b | 5.56.59.b | 5.58.22.b | 5.62.28.a |
| 5.88.64.a | 5.93.20.b | 5.135.6.a | 5.139.16.b | 5.139.18.a |
| 5.139.31.b | 5.139.46.a | 5.140.15.a | 5.144.21.c | 5.149.18.b |
| 5.151.23.a | 5.151.26.a | 5.160.9.b | 5.186.20.a | 6.22.3.a |
| 6.33.33.b | 6.45.55.a | 6.46.16.b | 6.51.18. b | 6.52.10.a |
| 6.53.8.a | 6.104.49.a | 6.105.11.a | 6.112.121.c | 6.114.104.b |
| 6.115.43.a | | | | |

१. अष्टा.५.२.११५ २. अष्टा.६.४.१४८ ३. अष्टा.६.४.१३

४. अष्टा.८.२.७ ५. महा.४.१२.१९

## ६९. दाशरथम्

**तस्मिन्दाशरथे युद्धे वर्तमाने भयावहे।**
**तावकानां परेषां च प्रेक्षका रथिनोऽभवन् ।।**[१]

दशानां रथानां समाहारः = दशरथम् इति द्विगुसमासः। दशरथम् इदं युद्धम् इति विग्रहे **तस्येदम**[२] इति सूत्रेण अण्प्रत्यये दशरथ – अण् इति स्थिते, अनुबन्धलोपे दशरथ + अ इति जाते, आद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे दाशरथ इति जाते ततः प्रातिपदिकत्वेन सौ, सोरमि पूर्वरूपे च **दाशरथम्** इति रूपं सिद्ध्यति। दशानां रथानां युद्धमित्यर्थः, न तु दशरथस्य पुत्रः रामः।

## ७०. सौभराजम्

**सौभराजमुपेत्याहमब्रुवं दुर्वचं वचः।**
**न च मां प्रत्यगृह्णात्स चारित्र्यपरिशङ्कितः ।।**[३]

सौभस्य (नगरस्य) राजा इति विग्रहे सौभ + ङस्, राजन् + सु इत्यवस्थायां **षष्ठी**[४] इति सूत्रेण तत्पुरुषसमासे **सुपो धातुप्रातिपदिकयोः**[५] इति सुब्लुकि सौभराजन् इति स्थिते **राजाहःसखिभ्यष्टच्**[६] इति सूत्रेण एतदन्तात्तत्पुरुषाट्टच् प्रत्यये कृते अनुबन्धलोपे, भसंज्ञायां **नस्तद्धिते**[७] इति सूत्रेण टिलोपे सौभराज इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **सौभराजः** इति रूपं सिद्ध्यति। शाल्वः इत्यर्थः।

सौभमित्युक्ते **हरिचन्द्रपुरम्, कामचारिपुरम्, शाल्वराजपुरम्** इति शब्दकल्पद्रुमः।[८]

---

१. भी.प.५८.२०  २. अष्टा.४.१.९२  ३. उ.प.१७६.३६  ४. अष्टा.२.२.८
५. अष्टा.२.४.७१  ६. अष्टा.५.४.९१  ७. अष्टा.६.४.१४४
८. शा.क.द्रु.भा.५,पृ.४५६

यथा महाभारतेऽपि[1] – **हतः सौभपतिः शाल्वस्त्वया सौभश्च पातितम्।**

**७१. दैतेयः**

**एतानि हृतराज्यानां दैतेयानां स्म मातले।**
**दीप्यमानानि दृश्यन्ते सर्वप्रहरणान्युत ।।**[2]

दितेरपत्यं पुमान इति विग्रहे दितिशब्दात् **इतश्चानिञः**[3] इति सूत्रेण ढक् प्रत्यये कृते दिति + ढक् इति स्थिते अनुबन्धलोपे कृते दिति + ढ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[4] इति ढस्य स्थाने एयादेशे आद्यचो वृद्धौ कृतायां भत्वात् इकारलोपे दैतेय इति जाते ततः प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **दैतेयः** इति रूपं सिद्ध्यति ।राक्षस इत्यर्थः ।यथा अमरे[5] –

**असुरा दैत्यदैतेयदनुजेन्द्रारिदानवाः।**
**शुक्रशिष्यादितिसुताः पूर्वदेवाः सुरद्विषः ।।**

हरिवंशे[6] यथा –

**त्रयः बाणं महाबाहो! दैतेयं देवपूजितः।**
**यदर्थमवतीर्णोऽसि तत् कर्म सफलीकुरु ।।**

**श्लोकसन्दर्भाः**

6.61.63.a

१. महा.३.१२.३३ २. उ.प.९६.१५

३. अष्टा.४.१.१२२ ४. अष्टा.७.१.२

५. अ.को.१.१० ६. हरि.म.१८२.७६

## ७२. ब्राह्मम्

**ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं च माधव।**
**मन्त्रास्तत्र भविश्यन्ति प्रयुक्ता सव्यसाचिना ।।**[१]

ब्रह्मा देवतास्येति विग्रहे ब्रह्मशब्दात् **सास्य देवता**[२] इति अण्प्रत्यये कृते ब्रह्मन् + अण् इति स्थिते अनुबन्धलोपे ब्रह्मन् + अ इति जाते णित्वादाद्यचो वृद्धौ सत्यां **नस्तद्धिते**[३] इति तद्धितप्रत्यये परतः नान्तस्य भस्य टेर्लोपे प्राप्ते तद्बाधनेन **अन्**[४] इति सूत्रेण प्रकृतिभावे प्राप्ते **ब्राह्मोऽजातौ**[५] इति निपातनाट्टिलोपे ब्राह्म इति जाते ततः प्रातिपदिकत्वात् सौ, सोरमि पूर्वरूपे च **ब्राह्मम्** इति रूपं सिद्ध्यति । नपुंसकलिङ्गः शब्दोऽयम्। अस्त्रविशेष इत्यर्थः।

यथा शब्दकल्पद्रुमें[६] – **ब्रह्मदेवतास्त्रादि।**

यथा रघुः[७]

**अमोघं सन्दधे चास्मै धनुष्येकधनुर्द्धरः।**
**ब्राह्ममस्त्रं प्रियाशोकशल्यनिष्कर्षणौषधम् ।।**

**ब्रह्मतीर्थम्** इत्यमरः।[८] तत्तु अङ्गुष्ठस्य मूले वर्तते। यथा –

**मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम्।**
**स्याद् ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि ।।**

अनेन तीर्थेन द्विजस्याचमनं भवति।

---

१. उ.प.१३९.३१ २. अष्टा.४.२.२४ ३. अष्टा.६.४.१४४
४. अष्टा.६.४.१६७ ५. अष्टा.६.४.१७१ ६. शा.क.द्रु.भा.३,पृ.४५४
७. रघु.वं.१२.९७ ८. अ.को.२.१६३

**श्लोकसन्दर्भा:**

5.158.14.a 5.185.15.b 5.185.16.a 6.116.38.b

उद्योगपर्वणि एकस्मिन् श्लोके **ब्राह्म:** इति शब्दस्य ब्रह्मसम्बन्धिमन्त्रा: इत्यपि अर्थ: गृह्यते। पुल्लिङ्ग: शब्दोऽयम्। यथा –

**स्वयोनिं भजते सर्वो विश्वस्वापोऽविशङ्कित:।**
**अहं त्वां वर्धयिष्यामि ब्राह्मैमन्त्रै: सनातने ।।**[१]

अत्राऽपि **सास्य देवता**[२] इति सूत्रेण अण्प्रत्यय:। प्रक्रिया पूर्ववत्।

**७३. दाशार्णक:**

**हिरण्यवर्मेति नृपो योऽसौ दाशार्णक: स्मृत:।**
**स च पादान्महीपाल: कन्यां तस्मै शिखण्डिने ।।**[३]

दशार्णस्यापत्यं राजा वा इति विग्रहे दशार्णशब्दात् **जनपदशब्दात्क्षत्रियादञ्**[४] इति क्षत्रियवाचकात् अञ्प्रत्यये कृते दशार्ण । अञ् इति स्थिते, अनुबन्धलोपे दशार्ण + अ इति जाते ञित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे दाशार्ण इति जाते, **संज्ञायां कन्**[५] इति संज्ञायां गम्यमानायां कन्प्रत्यये दाशार्ण + कन् इति स्थिते, अनुबन्धलोपे च कृते दाशार्णक इति जाते, तत: प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **दाशार्णक:** इति रूपं सिद्ध्यति। दशार्णराज: हिरण्यवर्मा इत्यर्थ:।

दशार्णदेशस्य विषये सिद्धान्तकौमुद्यां **प्रवत्सतरकम्बलवसनार्ण–देशानामृणे** इति वार्तिकव्याख्यानावसरे दशार्णो देश: इत्युक्तम्। तथा शब्दकल्पद्रुमे[६] – **दश ॠणानि दुर्गभूमयो जलाधारा वा यत्र** इति देशविशेष:। स विन्ध्यपर्वतस्य पूर्वदक्षिणस्यां दिशि वर्तते।

---

१. उ.प.१६.८ २. अष्टा.४.२.२४ ३. उ.प.१९०.१०

४. अष्टा.४.१.१६६ ५. अष्टा.५.३.५७ ६. शा.क.द्रु.भा.२.पृ.६९२

यथा बृहत्संहितायाम्[1] – **किष्किन्धकण्टकस्थलनिषादराष्ट्राणि पुरिकदशार्णाः।** सोऽस्याभिजनः तद्देशवासी वा इत्यर्थः।

**श्लोकसन्दर्भाः**

5.190.9.b

**७४. कैरातम्**

**यत्तद्घोरं पशुपतिः प्रादादस्त्रं महन्मम।**
**कैराते द्वन्द्वयुद्धे वै तदिदं मयि वर्तते ।।**[2]

किरातानामिदम् इति विग्रहे किरातशब्दात् **तस्येदम्**[3] इति अण्प्रत्यये किरात + अण् इति स्थिते अनुबन्धलोपे किरात + अ इति जाते, णित्वादाद्यचो वृद्धौ कृतायां भत्वेनाकार लोपे, कैरात इति जाते, ततः प्रातिपदिकत्वात् सौ, सोरमि पूर्वरूपे च **कैरातम्** इति रूपं सिद्ध्यति ।किरातजनानामिव घोरयुद्धमित्यर्थः।

किरं पर्यन्त भूमिम् अतति गच्छतीति किरातः। पतिता पर्वतजातिः इति आप्टे।[4]

किरं शूकरादिकम् अतति हिनस्तीति किरातः ।अथवा बलवान् पुरुषः इति शब्दकल्पद्रुमः।[5] यद्वा किरातपर्य्यन्तभूमौ भवः इति विग्रहे **तत्र भवः**[6] इति अण्प्रत्ययः।

**७५. कौबेरः**

**अभेद्यं कवचं दिव्यमक्षय्यौ च महेषुधी।**
**अस्त्रग्रामश्च माहेन्द्रो रौद्रः कौबेर एव च ।।**[7]

कुबेरो अधिष्ठाता देवताऽस्येति विग्रहे कुबेरशब्दात् **सास्य देवता**[8] इति अण्प्रत्यये कृते कुबेर + अण् इति स्थिते, अनुबन्धलोपे कुबेर + अ इति जाते, णित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे कौबेर इति जाते, ततः प्रातिपदिकत्वात्

---

१. बृ.सं.१४.१० २. उ.प.१९५.१२ ३. अष्टा.४.३.१२० ४. वा.शिआ.को.पृ.३२१
५. शा.क.द्रु.भा.२.पृ.१९१ ६. अष्टा.४.३.५३ ७. उ.प.१६६.३२ ८. अष्टा.४.२.२४

कुबेरस्य इदम् इत्यण्। परन्तु कौबेर: इत्यनेन अस्त्रविशेषस्य ग्रहणं कोशग्रन्थेषु कुत्रापि न लभ्यते।

**७६. रौद्र:**

**अभेद्यं कवचं दिव्यमक्षय्यौ च महेषुधी।**
**अस्त्रग्रामश्च माहेन्द्रो रौद्र: कौबेर एव च ।।**[१]

रुद्रो देवताऽस्य इति विग्रहे रुद्रशब्दात् **सास्य देवता**[२] इति अण्प्रत्यये रुद्र + अण् इति जाते अनुबन्धलोपे रुद्र + अ इति स्थिते, णित्वादाद्यचो वृद्धौ कृतायां भत्वेनाकारलोपे कृते रौद्र इति जाते तत: प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **रौद्र:** इति रूपं सिद्ध्यति। अस्त्रविशेष इत्यर्थ: ।

**सूर्यतेज:** इति शब्दकल्पद्रुम: । **भयङ्कर:** इत्यमर:[३] । यथा –

**दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्।**
**भयङ्करं प्रतिभयं रौद्रं तूग्रममी त्रिषु ।।**

**रौद्रो घर्मे रसे चण्ड्यं स्त्री तीव्रे भीषणे त्रिषु** इति मेदिनी।[४]

**कार्तिकेय:** इति महाभारते[५], यथा –

**आग्नेय: कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि।**
**श्रूयते भगवान् देव: सर्वदेवमयो गुह: ।।**[६]

उद्योगभीष्मपर्वणो: बहुत्र ''रौद्र:'' इति शब्देन ''भयङ्करकर्म'' इत्यर्थस्य ग्रहणं वर्तते। एवमेव बहुत्र संस्कृतग्रन्थेषु रौद्र: इति शब्देन ''भयङ्करकर्म'' इत्यर्थस्य ग्रहणं कृतम् ।

---

१. उ.प.१६६.३२ २. अष्टा.४.२.२४ २. शा.क.द्रु.भा.४,पृ.१९२
४. अ.को.१३७ ५. मे.को.१२८.८० ६. महा.१.१३८.१३

७७. पार्षत:

**यमौ च दृढधन्वानौ यमकल्पौ महाद्युती।**
**को जिजीविषुरासीदेद् धृष्टद्युम्नं च पार्षतम् ।।**[१]

पृषतस्यापत्यमिति विग्रहे पृषतशब्दात् **तस्यापत्यम्**[२] इति अण्प्रत्यये पृषत + अण् इति जाते अनुबन्धलोपे पृषत + अ इति स्थिते, आद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे कृते पार्षत इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गेच **पार्षत:** इति रूपं सिद्ध्यति।

द्रुपदकुमारः धृष्टद्युम्न इत्यर्थः।

यथा आप्टे[३] – द्रुपदपुत्रस्य धृष्टद्युम्नस्य पितृकुलसूचकं नाम।

यद्वा– "पार्षतः इति पृषोदरादित्वात् साधु, यद्वा परिषदि साधु इत्यर्थे **परिषदो**[४] **ण्य:** इत्यत्र योगविभागात् ण इति क्वचित् इति शब्दकल्पद्रुमः।[५]

**श्लोकसन्दर्भा:**

| | | | | |
|---|---|---|---|---|
| 5.25.3.1 | 5.25.10.a | 5.54.3.a | 5.56.31.2 | 5.78.13.b |
| 5.124.7.a | 5.149.50.b | 5.149.72.a | 5.189.10.b | 5.189.15.c |
| 5.190.3.a | 5.191.9.b | 5.193.57.b | 5.195.18.a | 6.19.18.a |
| 6.42.18.b | 6.45.30.a | 6.46.28.b | 6.46.30.a | 6.46.38.b |
| 6.46.39.a | 6.46.48.a | 6.48.8.b | 6.48.29.a | 6.49.1.a |
| 6.49.9.a | 6.49.20.b | 6.49.33.a | 6.49.35.b | 6.49.36.b |
| 6.50.82.b | 6.50.85.a | 6.50.87.b | 6.50.92.b | 6.50.98.a |
| 6.54.19.a | 6.54.36.b | 6.57.27.b | 6.57.35.a | 6.57.36.a |
| 6.58.9.a | 6.58.18.a | 6.58.25.a | 6.58.36.b | 6.58.41.b |
| 6.59.9.b | 6.65.8.b | 6.73.16.a | 6.73.25.a | 6.73.36.b |
| 6.73.37.b | 6.73.50.b | 6.73.51.b | 6.73.60.b | 6.73.63.b |
| 6.73.64.a | 6.73.68.b | 6.74.18.b | 6.77.24.b | 6.78.48.b |

१. उ.प.३.१७ २. अष्टा.४.१.९२ २. वा.शिआ.को.पृ.६५१

४. अष्टा.४.१.१०१ ५. शा.क.द्रु.भा.३,पृ.१३०

| | | | | |
|---|---|---|---|---|
| 6.78.50.a | 6.82.31.b | 6.82.32.b | 6.82.33.b | 6.82.50.a |
| 6.83.15.b | 6.83.16.b | 6 .83.17.a | 6.86.81.a | 6.107.39.a |
| 6.107.40a | 6.110.38.a | 6.111.19.a | 6.112.44.a | 6.112.44.b |
| 6.112.45.a | 6.112.47.a | 6.112.50.a | 6.112.52.a | 6.112.51.b |
| 6.113.36.b | 6.113.42.a | 6.114.9.b | 6.114.20.a | |

## ७८. आश्विनेयौ

**आश्विनेयौ नरव्याघ्रौ रूपेणप्रतिमौ भुवि।**
**तौ च त्वां गुरुवत् प्रेम्णा पूजया प्रत्युदीयताम् ।।**[१]

अश्विन्याः अपत्ये इति विग्रहे अश्विनीशब्दात् **स्त्रीभ्यो ढक्**[२] इति ढक्प्रत्यये अश्विनी + ढक् इति स्थिते, अनुबन्धलोपे अश्विनी + ढ इति जाते, कित्वादाद्यचो वृद्धौ सत्यां भत्वेन ईकारलोपे आश्विन् + ढ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[३] इति ढस्य स्थाने एयादेशे आश्विनेय इति जाते ततः स्वाद्युत्पत्तौ प्रथमाविभक्तौ द्विवचने आश्विनेय + औ इति जाते, **प्रथमयोः पूर्वसवर्णः**[४] इति सूत्रेण पूर्वसवर्णदीर्घे प्राप्ते **नादिचि**[५] इति तन्निषेधे **वृद्धिरेचि**[६] इति वृद्धिरेकादेशे आश्विनेयौ इति रूपं सिद्ध्यति । नकुलसहदेवौ इत्यर्थः।

यथा शब्दकल्पद्रुमे[७] – पाण्डुपुत्रौ नकुलसहदेवनामानौ, अश्विनीकुमार– जातत्वात् तयोस्तथात्वम्।

अश्विनीकुमारौ इत्यमरः[८], यथा – **दाक्षायण्योऽश्विनीत्यादि तारा अश्वयुगश्विनी नकुलसहदेवौ नाम, पञ्चपाण्डवेषु अन्तिमौ द्वौ** इति आप्टे।[९]

१. उ.प.१३६.१६ २. अष्टा.४.१.१२० ३. अष्टा.७.१.२
४. अष्टा.६.१.१०२ ५. अष्टा.६.१.१०५ ६. अष्टा.६.१.८८
७. शा.क.द्रु.भा.१.पृ.२३५ ८. अष्टा.१.६.२ ९. वा.शिआ.को.पृ.१९४

## ७९. माहेन्द्रम्

**यो माहेन्द्रं धनुर्लेभे तुल्यं गाण्डीवतेजसा।**
**शाङ्‌र्गेण च महाबाहुः सम्मितं दिव्यमक्षयम् ।।**[१]

महेन्द्रो देवताऽस्येति विग्रहे महेन्द्रशब्दात् **महेन्द्राद्धाणौ च**[२] इति अण्प्रत्यये महेन्द्र + अण् इति जाते अनुबन्धलोपे महेन्द्र + अ इति स्थिते णित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे माहेन्द्र इति जाते ततः प्रातिपदिकत्वात् सौ, अमादेशे पूर्वरूपे च **माहेन्द्रम्** इति रूपं सिद्ध्यति ।महेन्द्रस्य विजयि धनुषः इत्यर्थः।

शुभदण्डविशेषः । रव्यादिसप्तवारेषु वायुवरुणयममाहेन्द्रवामैकैकदण्डा भवन्ति। तत्र वरुणमाहेन्द्रयोर्दण्डौ शुभौ इति शब्दकल्पद्रुमः।[३]

माहेन्द्रम् इति शब्दस्य प्रयोगः उद्योगपर्वणि इन्द्रस्य स्थानमित्यस्मिन्नर्थे अपि कृतः व्यासेन यथा –

**इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत।**
**माहेन्द्रं च ग्रहं लेभे लोकानांचेश्वरोऽभवत् ।।**[४]

अत्र **तस्येदम्**[५] इति अणप्रत्ययः। प्रक्रिया पूर्ववत्।

### श्लोकसन्दर्भाः

5.155.5.b 5.166.32.b 6.51.10.b

## ८०. प्राजापत्यम्

प्राजापत्यमिति शब्दस्य प्रयोगः उद्योगपर्वणि त्रिषु अर्थेषु दरीदृश्यते। तेषु प्रथमः –

---

१. उ.प.१५५.४ २. अष्टा.४.२.२९ ३. शा.क.द्रु.भा.३,पृ.७१७

४. उ.प.१३२.२३ ५. अष्टा.४.३.१२०

**प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः।**
**शनैश्चरः पीडयति पीडयन्प्राणिनोऽधिकम् ।।**[1]

प्रजापतिर्देवताऽस्य इति विग्रहे प्रजापतिशब्दात् **दित्यदित्यादित्यपत्युत्तर–पदाण्ण्यः**[2] इति ण्यप्रत्यये कृते प्रजापति + ण्य इति स्थिते अनुबन्धलोपे, प्रजापति + य इति जाते णित्वादाद्यचो वृद्धौ सत्यां भत्वेन इकारलोपे प्राजापत्य इति जाते ततः प्रातिपदिकत्वात् सौ अमादेशे पूर्वरूपे च **प्राजापत्यम्** इति रूपं सिद्ध्यति। रोहिणीनक्षत्रमित्यर्थः।

यथा शब्दकल्पद्रुमे[3] –

**ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा।**
**पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्तिता ।।**

द्वितीयः

**यत्किञ्चिदेतद्वित्तमस्यां पृथिव्यां यद्देवानां त्रिदशानां परत्र ।**
**प्राजापत्यं त्रिदिवं ब्रह्मलोकं नामधर्मतः सञ्जय कामये तत ।।**[4]

अत्र प्रजापतेः इदम् इति विग्रहे **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः**[5] इति ण्यप्रत्यये कृते प्रजापति + ण्य, प्रक्रिया पूर्ववत्। प्रजापतेः धनमित्यर्थः।।

तृतीयः

**प्राजापत्यं विश्वकृतं प्रस्वापं नाम भारत।**
**न हीदं वेद रामोऽपि पृथिव्यां वा पुमान्क्वचित् ।।**[6]

---

१. उ.प.१४१.७ २. पा.सू.५.२८.८ ३. शा.क.द्रु.भा.३,पृ.३०६
४. उ.प.२८.८ ५. अष्टा.५.२८.८ ६. उ.प.१८४.१२

प्रजापतिर्देवताऽस्य इति विग्रहे **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः**[१] इति ण्यप्रत्यये कृते प्रजापति + ण्य, प्रक्रिया पूर्ववत्। अस्त्रविशेष इत्यर्थः।

### ८१. शाखीयः

**न मया त्वं न पित्रासि जातः क्वाभ्यागतो ह्यसि।**
**निर्मन्युरूपशाखाः पुरुषः क्लीबसाधनः ।।**[२]

शाखायां भवः इति विग्रहे शाखाशब्दात् **वृद्धिरादैच्**[३] इति सूत्रेण आ इति वर्णस्य वृद्धिसंज्ञायां **वृद्धिर्यस्याचामादिस्तद् वृद्धम्**[४] इति सूत्रेण शाखा इति सम्पूर्णसमुदायस्य वृद्धसंज्ञा, ततः **वृद्धाच्छः**[५] इति सूत्रेण अण् इति प्रत्ययं बाधित्वा छप्रत्यये कृते शाखा + छ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[६] इति सूत्रेण छस्थाने ईयादेशे शाखा + ईय इति जाते, भसंज्ञायाम् आकारलोपे कृते शाखीय इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च शाखीयः इति रूपं सिद्ध्यति।

### ८२. यौधिष्ठिरम्

**अर्जुनेन समं युद्धं मम यौधिष्ठिरे बले।**
**अर्जुनं हि निहत्याजौ सम्प्राप्तं स्यात्फलं मया।**
**यशसा चापि युज्येयं निहतः सव्यसाचिना**[७]

अक्षौहिणी हि या सेना, सा यौधिष्ठिरं बलम्। युधिष्ठिरस्येदमिति विग्रहे **तस्येदम्**[८] इति सूत्रेण युधिष्ठिरशब्दात् अण्प्रत्यये कृते युधिष्ठिर + अण् इति स्थिते,

---

१. अष्टा.५.२८.८ २. उ.प.२८.८ ३. अष्टा.१.१.१
४. अष्टा.१.१.७३ ५. अष्टा.४.२.११४ ६. अष्टा.७.१.२
७. उ.प.२८.८ ८. अष्टा.४.१.१२

अनुबन्धलोपे युधिष्ठिर + अ इति जाते, भत्वेनाकारलोपे, आद्यचो वृद्धौ सत्यां यौधिष्ठिर् + अ इति जाते, ततः प्रातिपदिकत्वात् सौ, अमादेशे पूर्वरूपेच **यौधिष्ठिरम्** इति रूपं सिद्ध्यति । युधिष्ठिरस्य बलमित्यर्थः। नपुंसकलिङ्गशब्दोऽयम्।

**श्लोकसन्दर्भाः**

5.19.6.a    5.143.8.b    6.55.44.b    6.55.65.b    6.55.66.b
6.86.79.a    6.102.52.a

**यौधिष्ठिरः**

**यौधिष्ठिरस्तु संक्रुद्धः सौबलं निशितैः शरैः।**
**व्यदारयत संग्रामे मघवानिव दानवम्ः।।**[१]

युधिष्ठिरस्य अपत्यमिति विग्रहे **ऋष्यन्धकवृष्णिकुरुभ्यश्च**[२] इति सूत्रेण युधिष्ठिरशब्दात् अण्प्रत्यये कृते युधिष्ठिर + अण् इति स्थिते, अनुबन्धलोपे, युधिष्ठिर + अ इति जाते, भत्वादकारलोपे णित्वादाद्यचो वृद्धौ कृतायां प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **यौधिष्ठिरः** इति रूपं सिद्ध्यति । युधिष्ठिरस्य पुत्रः प्रतिविन्ध्य इत्यर्थः।

## ८३. भैरवम्

**खटाखटेति वाशन्तो भैरवं भयवेदिनः।**
**कह्वाः प्रयान्ति मध्येन दक्षिणामभितो दिशम् ।।**[३]

भीरोः इदमिति विग्रहे भीरुशब्दात् **तस्येदम्**[४] इति स्वार्थे अणप्रत्यये कृते भीरु + अण् इति स्थिते, अनुबन्धलोपे भीरु + अ इति जाते, णित्वादाद्यचो वृद्धौ

१. भी.प.४३.६१   २. अष्टा.४.१.११४   ३. भी.प.२.१९   ४. अष्टा.४.३.१२०

**ओर्गुणः**[१] इति उकारस्य गुणे कृते भैरव इति जाते ततः प्रातिपदिकत्वात् सौ, अमादेशे पूर्वरूपे च **भैरवम्** इति रूपं सिद्ध्यति। भयङ्करः शब्दः इत्यर्थः।

**भयानकम्, दारुणम्, भीमम्, प्रतिभयम्, घोरम्** इत्यमरः ।[२] यथा –

**विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम्।**
**दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।।**

मेदिनीकोशे[३] यथा –

**दूर्वायां भैरवः पुंसि शङ्करे भीषमे त्रिषु ।।**

रागेषु प्रथमरागः। महादेवमुखान्निर्गतः। अस्य जातिः औडवः। अर्थात् धैवतनिषादषड्जगान्धारमध्यम इति पञ्चभिः स्वरैः मिलितः। अस्य गृहं धैवतस्वरः। रागमालायामस्याकारः महादेवाकारवत् । अर्थात् सुन्दरसन्यासी। भस्मनृक्षितवदनः, जटामस्तकः, जटापद्गङ्गाजलः, कङ्कणभूषितहस्तः, ललाटार्द्धचन्द्रः त्रिनेत्रः, सर्पवेष्टितस्कन्धबाहुः, भालतिलकः, स्कन्धस्थ हस्तिचर्माः अथवा द्वीपिचर्मोपविष्टः, त्रिशूलहस्तः इति शब्दकल्पद्रुमः।[४]

उद्योगभीष्मपर्वणोः सर्वत्रापि **भैरवम्** इति पदेन **भयङ्करशब्दः** इति अर्थस्यैव ग्रहणं वर्तते । परन्तु द्वयोः श्लोकयोः **भैरवः** इति पदेन भयङ्करमस्त्रम् इत्यर्थः स्वीक्रियते। पुल्लिङ्गशब्दोऽयम् । यथा –

**अभ्यधावत गाङ्गेयं भैरवास्त्रो धनञ्जयः।**
**दिशं प्राची प्रतीची च न जानीमोऽस्त्रमोहिताः**[५]

---

१. अष्टा.६.४.१४६ २. अ.को.१.१३६,१३७ ३. मे.को.१६०.४६
४. शा.क.द्रु.भा.३,पृ.४३ ५. भी.प.६७.७

**विजयी च रणे नित्यं भैरवास्त्रश्च पाण्डवः।**
**तस्य मार्ग परिहरन्द्रुतं गच्छ यतव्रतम् ।।**[१]

परन्तु कोशग्रन्थेषु कुत्रापि भैरवः इति पदेन भैरवास्त्रः इति अर्थस्य ग्रहणं न दृश्यते।।

**श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.50.30.a | 6.44.12.b | 6.44.44.a | 6.55.122.a | 6.59.2.b |
| 6.64.3.0 | 6.82.43.a | 6.83.38.a | 6.86.72.a | 6.88.29.b |
| 6.89.6.b | 6.91.48.a | 6.95.41.c | 6.95.49.b | 6.108.24.a |

**८४. केशवः**

**एवमुक्तस्तु कृष्णेन कुन्तीपुत्रो धनञ्जय।**
**अयुध्यमानं सङ्ग्रामे वरयामास केशवम् ।।**[२]

प्रशस्ताः केशाः सन्त्यस्येति विग्रहे केशशब्दात **केशाद्वोऽन्यतरस्याम्**[३] इति सूत्रेण मत्वर्थे वप्रत्यये कृते केशव इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **केशवः** इति रूपं सिद्ध्यति। कृष्णस्य नामविशेषः इत्यर्थः।

शब्दकल्पद्रुमें[४] यथा – ''को ब्रह्मा, ईशः रुद्रः, तौ आत्मनि स्वरूपे वयति प्रलये उपाधिरूपमूर्तित्रयमुक्त्वा एकमात्रपरमात्मस्वरूपेणावतिष्ठते'' इति। अत्रापि केशशब्देन वप्रत्यये कृते केशवः इति शब्दः सिद्ध्यति।

अन्यच्च[५] शब्दकल्पद्रुमे –

''के जले शववत् भातीति। प्रलयकाले क्षीरोदशायितया तथात्वम्।'' ''कश्च अश्च ईशश्च ते केशाः। ब्रह्मविष्णुरुद्राः नियम्यतया सन्त्यस्य।'' यद्वा

१. भी.प.१०८.२४ २. उ.प.७.१९ ३. अष्टा.५.२.१०९
४. शा.क.द्रु.भा.२.पृ.१९६ ५. शा.क.द्रु.भा.२.पृ.१९६

''कश्च ईशश्च तौ केशी पत्रपौत्रत्वेन भवतोऽस्य।'' **केशाद्वोऽन्यतरस्याम्**[1] इति वप्रत्यय:। अथवा वाति गच्छति तद्वृत्तया। वा + क:। स्वरूपतस्तेषां भेदाभावादपि वासुदेवे सर्वात्मनि परमेश्वरस्य वृत्ति:।

अतो विष्णुसंहितायाम्[2] –

**नारसिंहवपु: श्रीमान् केशव: पुरुषोत्तम:।**
**त्रिलोकात्मा त्रिलोकेश: केशव: केशिहा हरि: ।।** इति।

विष्णु: इत्यमर:[3], यथा –

**विष्णुर्नारायण: कृष्णो वैकुण्ठो विष्टरश्रवा:।**
**दामोदरो हृषीकेश: केशवो माधव: स्वभू: ।।**

यद्वा अभिरूपा: केशा यस्य स: केशव:। कश्च अश्च ईशश्च केशास्त्रिमूर्त्तयस्ते वशे वर्तन्ते यस्य स:। केशीदानवहननद्वारा केशव:। त्रय: केशिन: इति ब्रह्मविष्णुशिवाख्या हि शक्तय: केशसंज्ञिता:।

**केशवोऽजे च पुन्नागे पुंसि केशवति त्रिषु** इति मेदिनी।[4]

पदस्यास्य श्लोकसन्दर्भा: आधिक्यात् परिशिष्टे दीयन्ते।

**८५. सौभद्र:**

**सौभद्रं च महेष्वासममरैरपि दु:सहम्।**
**गदप्रद्युम्नसाम्बांश्च कालवज्रानलोपमान् ।।**[5]

१. अष्टा.५.२.१०९ २. वि.सं.श्लो.१४ ३. अ.को.१.१२
४. मे.को.१६०.३४ ५. उ.प.३.११

सुभद्राया अपत्यं पुमानिति विग्रहे सुभद्राशब्दात् **शिवादिभ्योऽण्**[1] इति सूत्रेण षष्ठ्यन्तात्समर्थात् अण्प्रत्यये सुभद्रा + अण्, अनुबन्धलोपे सुभद्रा + अ इति जाते, आद्यचो वृद्धौ कृतायां, भत्वेनाकारलोपे कृते सौभद्र इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे, विसर्गे च **सौभद्रः** इति रूपं सिद्ध्यति। अभिमन्युः इत्यर्थः ।

**सुभद्रापुत्रः स चाभिमन्युः** इति शब्दकल्पद्रुमः[2] । शब्दकल्पद्रुमे **सौभद्रम्** इति नपुंसकलिङ्गशब्दस्य तीर्थविशेषः इत्यप्यर्थः विद्यते।

यथा महाभारते[3] एव –

**अगस्त्यतीर्थं सौभद्रं पौलामं सुपावनम्।**
**कारन्धमं प्रसन्नं च हयमेधफलञ्च यत् ।।**
**भारद्वाजस्य तीर्थं च पापप्रशमनं महत्।**

**श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.47.29.b | 5.55.16.b | 5.56.19.b | 5.138.12.b | 5 .139.32.b |
| 5.149.50.b | 5.161.9.a | 6.19.20.b | 6.23.6.b | 6.23.18.b |
| 6.42.18.a | 6.43.14.b | 6.43.15.a | 6.45.25. b | 6.45.26.a |
| 6.45.26.b | 6.45.28.a | 6.45.29.b | 6.48.8.a | 6.51.5.b |
| 6.51.9.a | 6.51.12.a | 6.51.17.a | 6.54.22.b | 6.56.25.b |
| 6.57.1.b | 6.57.6.b | 6.58.36.a | 6.58.42.b | 6.58.43.b |
| 6.58.54.a | 6.65.11.b | 6.68.8.b | 6.69.23.a | 6.69.32.a |
| 6-69-33-b | 6.69.34.b | 6.71.7.a | 6.73.52.a | 6.75.25.a |
| 6.75.28.b | 6.75.31.b | 6.80.38.b | 6.92.38.a | 6.92.39.a |
| 6.92.40.b | 6.92.41.a | 6.96.2.a | 6.96.4.b | 6.96.7.a |
| 6.96.14.a | 6.96.24.a | 6.97.2.a | 6.97.5. b | 6.97.9.a |

१. अष्टा.४.१.११२ २. शा.क.द्रु.भा.५.पृ.४२४ ३. म.भा.१२.८.३

| 6.97.20.a | 6.97.29.b | 6.100.21.b | 6.104.5.b | 6.112.31.a |
|---|---|---|---|---|
| 6.111.31.b | 6.112.8.b | 6.112.30.a | 6.106.4.a | 6.113.37.b |

### ८६. द्रौपदेयः

**समानीय पाण्डवान्सृञ्जयाश्च**
**जनार्दनं युयुधानं विराटम्।**
**अनामयं मद्वचनेन पृच्छेः**
**सर्वास्तथा द्रौपदेयांश्च पञ्च ।।**[१]

द्रौपद्या अपत्यमिति विग्रहे द्रौपदीशब्दात् **स्त्रीभ्यो ढक्**[२] इति सूत्रेण स्त्रीप्रत्ययान्तात् ढक्प्रत्यये कृते द्रौपदी + ढक् इति स्थिते, अनुबन्धलोपे द्रौपदी + ढ इति जाते, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[३] इति सूत्रेण ढस्य स्थाने एयादेशे कृते द्रौपदी + एय इति स्थिते सामर्थ्याद् पुनः वृद्धौ कृतायां भत्वादीकारलोपे द्रौपदेय इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **द्रौपदेयः** इति रूपं सिद्ध्यति। द्रौपदीपुत्र इत्यर्थः।

### श्लोकसन्दर्भाः

| 5.47.27.a | 5.49.37.a | 5.56.20.a | 5.138.12.b | 5.138.17.a |
|---|---|---|---|---|
| 5.138.22.b | 5.139.24.b | 5.149.45.a | 5.190.50.b | 5.161.8.b |
| 5.167.1.a | 5.197.6.a | 5.197.12.a | 6.19.20.b | 6.23.6.b |
| 6.23.18.a | 6.46.35.a | 6.46.48.b | 6.48.23.b | 6.53.27.b |
| 6.58.18.b | 6.59.10.a | 6.65.11.b | 6.65.25.a | 6.71.7.a |
| 6.73.54.a | 6.74.26.a | 6.75.21.a | 6.83.21.b | 6.85.17.a |
| 6.89.13.a | 6.91.22.b | 6.91.39.a | 6.91.69.a | 6.96.34.b |
| 6.96.35.a | 6.104.5.b | 6.113.38.a | | |

१. उ.प.२२.३८ २. अष्टा.४.१.१२० ३. अष्टा.७.१.२

## ८७, वारणावतम्

**कुशस्थलं वृकस्थलमासन्दी वारणावतम्।**
**अवसानं भवेदत्र किञ्चिदेव तु पञ्चमम् ।।**[१]

वियते अनेन वृणोतीति वा इति वरणा। वरणा इति नदीविशेषः, सा तु वारणस्युत्तरसीमा[२]। वरणा विद्यते अत्र इति विग्रहे **नद्यां मतुप्**[३] इति सूत्रेण मतुप्रत्यये वरणा + मतुप् इति स्थिते, अनुबन्धलोपे वरण + मत् इति जाते **मादुपधायाश्च मतोर्वोऽयवादिभ्यः**[४] इति मवर्णान्तादवर्णान्तात्प्रातिपदिकात्परस्य मतो मस्य वः इति आदेशे कृते वरणावत् इति जाते, ततः वरणावतः तीरे भवम् इति विग्रहे **तत्र भवः**[५] इति अण्प्रत्यये वरणावत् + अण् इति स्थिते, अनुबन्धलोपे वरणावत् + अ इति जाते णित्वादाद्यचो वृद्धौ सत्यां वारणावत इति जाते ततः प्रातिपदिकत्वात् सौ, सोरमि पूर्वरूपे च **वारणावतम्** इति रूपं सिद्ध्यति। नगरविशेष इत्यर्थः।

**वरणस्तु पुमान् तिक्तशाकप्राकारयोरपि।**
**क्लीबं कन्यादिवरणे वेष्टने स्त्री नदीभिदि।**
**वारणं प्रतिषेधे स्याद्वारणस्तु मतङ्गजे ।।** इति मेदिनी।[६]

**श्लोकसन्दर्भाः**

5-70.15.a 5.80.7.b 5.126.13.a

१. उ.प.३१.१९ २. शा.क.द्रु.भा.४,पृ.२७१ ३. अष्टा.४.२.८५
४. अष्टा.८.२.९ ५. अष्टा.४.३.५३ ६. मे.को.४९.६६.६८

## ८८. आग्नेयम्

**ततोऽस्त्रमहमाग्नेयमनुमन्त्र्य प्रयुक्तवान्।**
**वारुणेनैव रामस्तद्वारयामास मे विभुः ।।**[१]

अग्निः देवता अस्येति विग्रहे अग्निशब्दात् **सर्वत्राग्निकलिभ्यं ढग्वक्तव्यः**[२] इति वार्तिकेन ढक् प्रत्यये अग्नि + ढक् इति स्थिते, अनुबन्धलोपे अग्नि + ढ इति जाते कित्वादाद्यचो वृद्धौ सत्याम् आग्नि + ढ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[३] इति सूत्रेण ढस्य स्थाने एयादेशे भत्वादिकारलोपे च आग्नेय इति जाते, ततः प्रातिपदिकत्वात् सौ, सोरमि पूर्वरूपे च **आग्नेयम्** इति रूपं सिद्ध्यति। अस्त्रविशेष इत्यर्थः।

**कृत्तिकानक्षत्रम्, स्वर्णम्, रुधिरम्, धृतम्, आग्नेयास्त्र**मिति आप्टे[४]।
**स्वर्णम्** इति राजनिघण्टुः[५] । **आग्नेयव्रतम्** इति शब्दकल्पद्रुमः[६] ।
यथा मनुस्मृतौ[७] – **दुवृसामन्त हिंस्त्रस्य तदाग्नेयव्रतम्** इति।

**श्लोकसन्दर्भाः**

6.116.38.a

## ८९. सौम्यम्

**आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम्।**
**ऐन्द्रं पाशुपतं ब्राह्मं पारमेष्ठ्यं प्रजापतेः।**
**धातुस्त्वष्टुश्च सवितुर्दिव्यान्यस्त्राणि सर्वशः ।।**[८]

१. उ.प.१८१.१२ २. वा.४०९ ३. अष्टा.७.१.२
४. वा.शिआ.को.पृ.१६४ ५. रा.नि.पृ.११ ६. शा.क.द्रु.भा.३,पृ.२०६
७. म.स्मृ.९.३१० ८. भी.प.११६.३८

सोमो देवताऽस्येति विग्रहे सोमशब्दात् **सोमाट्ट्यण्**[1] इति ट्यण्प्रत्यये सोम + ट्यण् इति स्थिते, **चुटू**[2] इति टकारस्येत्संज्ञा, **हलन्त्यम्**[3] इति णकारस्येत्संज्ञा, **तस्य लोपः**[4] इति द्वयोः लोपे सोम + य इति जाते, आद्यचो वृद्धौ कृतायां भत्वेनाकारलोपे च सोम्य इति जाते ततः प्रातिपदिकत्वात् सौ, सोरमि पूर्वरूपे च **सौम्यम्** इति रूपं सिद्ध्यति। अस्त्रविशेषः।

**उदुम्बरवृक्षः** इति राजनिघण्टुः[5]।

**सौम्यौ ज्ञेना त्रिष्वनुग्रहे मनोज्ञे सोमदैवते** इति मेदिनी।[6]

**भूखण्डविशेषः, सौम्यकृच्छ्रव्रतम्, पितृगणविशेषः** इति शब्दकल्पद्रुमः।[7]

उद्योगभीष्मपर्वणोः एकस्मिन् स्थाने एव **सौम्यम्** इति पदेन शस्त्रविशेषस्य ग्रहणं वर्तते। अन्यत्र तु सौम्यम् इति पदेन **मृदुस्वभावः, प्रियस्वभावः** इत्याद्यर्थानां ग्रहणं विद्यते।

**९०. याम्यः**

**याम्यश्च वारुणश्चैव गदाश्चोग्रप्रदर्शनाः।**
**वज्रादीनि च मुख्यानि नानाप्रहरणानि वै ॥**[8]

यमो देवतास्येति विग्रहे यमशब्दात् **यमाच्चेति वक्तव्यम्**[9] इति ण्यप्रत्यये यम + ण्य इति स्थिते, अनुबन्धलोपे यम + य इति जाते, णित्वादाद्यचो वृद्धौ कृतायां, भत्वेनाकारलोपे, याम्य इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **याम्यः** इति रूपं सिद्ध्यति। अस्त्रविशेषः।

---

१. अष्टा.४.२.३०   २. अष्टा.१.२.७   ३. अष्टा.७.१.२
४. अष्टरा.१.३.९   ५. रा.नि.पृ.६५०   ६. मे.को.११७.६५
७. शा.क.द्रु.भा.५,पृ.४२५   ८. उ.प.१६६,३३   ९. वा.३७८

वस्तुतः **यमाच्चेति वक्तव्यम्** इति यमशब्दात् ण्यप्रत्ययः काशिकायां दृश्यते। भाष्ये त्विदं न दृश्यत इति भावः ।अतः एवमत्र प्रक्रिया – यमस्येदमित्यर्थे यमशब्दात् **तस्येदम्**[1] इत्यणि याम इति जाते ततः स्वार्थे **चतुर्वर्णादीनां स्वार्थे उपसंख्यानम्**[2] इति वार्तिकेन ष्यञ् प्रत्ययेऽनुबन्धलोपे यस्येति च इत्यलोपे याम्य इति सिद्ध्यति।

**यमसम्बन्धिनः** इति आप्टे।[3] **याम्याऽवाच्यां भरण्याञ्च पुंस्यगस्त्ये च चन्दने** इति मेदिनी।[4]

**९१. शैनेयः**

**शैनेया हि चैत्रकाश्चान्धकाश्च**
**वार्ष्णेयभोजारू कौकुराः सृञ्जयाश्च।**
**उपासीना वासुदेवस्य बुद्धिः**
**निगृह्य शत्रून्सुहृदो नन्दयन्ति ।।**[5]

शिनोर्गोत्रापत्यमिति विग्रहे शिनिशब्दात् **इतश्चानिञः**[6] इति ढक्प्रत्यये कृते शिनि । ढक् इति स्थिते, अनुबन्धलोपे शिनि + ढ इति जाते, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[7] इति ढस्य स्थाने एयादेशे शिनि + एय इति जाते, कित्वादाद्यचो वृद्धौ सत्यां भत्वेनेकारलोपे शैनेय इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **शैनेयः** इति रूपं सिद्ध्यति। सात्यकिः इत्यर्थः।

**सात्यकिः, स तु श्रीकृष्णसारथिः** इति शब्दकल्पद्रुमः।[8]

---

१. अष्टा.४.३.१२० २. वा.३०९१ ३. वा.शि.आ.को.पृ.८९७
४. मे.को.१२६.४८ ५. उ.प.२८.११ ६. अष्टा.४.१.१२२
७. अष्टा.७.१.२ ८. शा.क.द्रु.भा.५,पृ.१३७

**श्लोकसन्दर्भा:**

| | | | | |
|---|---|---|---|---|
| 5.47.7.b | 5.52.4.b | 5.57.22.b | 5.79.9.b | 6.4.8.a |
| 6.5.92.a | 6.54.23.a | 6.55.81.b | 6.55.84.b | 6.65.22.a |
| 6.78.38.a | 6.78.42.b | 6.97.40.a | 6.97.47.a | 6.97.51.a |
| 6.97.53.b | 6.97.42.b | 6.107.8.a | 6.107.8.a | 6.107.16.b |
| 6.112.10.a | | | | |

## ९२. कौरव्य:

**सतं सत्कृत्य कौरव्यः प्रेषयामास पाण्डवान्।**
**सभामध्ये समाहूय सञ्जयं वाक्यमब्रवीत् ॥**[१]

कुरोरपत्यमिति विग्रहे कुरुशब्दात् **कुर्वादिभ्यो ण्य:**[२] इति ण्यप्रत्यये कृते कुरु + ण्य इति स्थिते, अनुबन्धलोपे कुरु +य, णित्वादाद्यचो वृद्धौ कृतायाम् **ओर्गुण:**[३] इति उवर्णान्तस्य भस्य गुणे कृते कुरो + य इति जाते, **वान्तो यि प्रत्यये**[४] इति अवादेशे, **कौरव्य** इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च कौरव्यः इति रूपं सिद्ध्यति। कौरव्याः ब्राह्मणाः इत्यर्थः।

अत्र यदि क्षत्रियवाचिनः कौरव्यशब्दस्य प्रयोगः क्रियते चेत् ण्यप्रत्ययस्य लुक बोध्यम्। शब्दकल्पद्रुमे[५] यथा – **कौरव्याः ब्राह्मणाः कुरुसम्बन्धिनो ब्राह्मणा** इत्यर्थः। क्षत्रिये तु **कुर्वादिभ्यो ण्य:**[६] इति ण्ये कृते **तद्राजस्य बहुषु तेनैवास्त्रियाम्**[७] इति बहुत्वे लुकि कुरव इति बोध्यम्।

---

१. उ.प.२१.२१ २. अष्टा.४.१.१५१ ३. अष्टा.६.४.१४६
४. अष्टा.६.१.७९ ५. शा.क.द्रु.भा.२,पृ.२०७ ६. अष्टा.४.१.१७२
७. अष्टा.२.४.६२

क्षत्रियवाचिकौरव्यशब्दप्रक्रियायां **तु कुरुनादिभ्यो ण्यः**[१] इति ण्यप्रत्यये कृते कौरव्यशब्दस्य सिद्धिः।

**नागविशेषः** इति शब्दकल्पद्रुमः।[२]

यथा महाभारते[३] —

**कौरव्यो धृतराष्ट्रश्च पुष्करः शल्यकस्तथा।**
**विरजाश्च सुबाहश्च शालिपिण्डश्च वीर्य्यवान् ।।**

परन्तु उद्योगभीष्मपर्वणोः कौरव्यशब्देनापि क्षत्रियवाच्यानां कौरवाणां ग्रहणं दृश्यते। उभयोः पदयोः श्लोकसन्दर्भाणाम् आधिक्यात् तत्र तत्र द्रष्टव्याः।

**९३. पाण्डवेयः**

**वनं राजा धृतराष्ट्रः सपुत्रो व्याघ्रा वने सञ्जय पाण्डवेयाः।**
**मा वनं छिन्धि सव्याघ्रं मा व्याघ्रान्नीनशो वनात् ।।**[४]

पाण्डोः अपत्यमित्यर्थे पाण्डुशब्दात् **शुभ्रादिभ्यश्च**[५] इति ढक् प्रत्यये पाण्डु + ढक् इति दशायायामनुबन्धलोपे आदिवृद्धौ **ओर्गुणः**[६] इति गुणे **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[७] इति ढस्य एयादेशे, ओकारस्य अवादेशे च पाण्डवेयः इति सिद्ध्यति। शुभ्रादिगणः आकृतिगणः । तेन पाण्डवेय इत्यादिसिद्धम् इति तत्त्वबोधिनी। युधिष्ठिर– सहिताः पञ्च भ्रातरः इत्यर्थः।

पाण्डवेयः इति शब्देन अभिमन्युपुत्रस्य परीक्षितस्यापि ग्रहणं भागवते वर्तते। न तु महाभारते, यथा —

---

१. अष्टा.४.१.१७२ २. शा.क.द्रु.भा.२,पृ.२०७ ३. महा.१.३५.१३,१४
४. उ.प.२९.४७ ५. अष्टा.४.१.१२३ ६. अष्टा.६.४.१४६
७. अष्टा.७.१.२

**कथं वा पाण्डवेयस्य राजर्षेर्मुनिना सह।**
**संवादः समभूत्तात् यत्रैषा सात्वती श्रुतिः।।**[१]

**श्लोकसन्दर्भाः**

5.89.27.b 6.105.35.a

**९४. वैश्रवणः**

**नक्षत्राणि कर्मणामुत्र भान्ति रुद्रादित्या वसवोऽथापि विश्वे।**
**यमो राजा वैश्रवणः कुबेरो गन्धर्वयक्षाप्सरसश्च शुभ्राः।**
**ब्रह्मचर्यं वेदविद्यां क्रियाश्च निषेवमाणा मुनयोऽमुत्र भान्ति ।।**[२]

विश्रवणस्यापत्यमिति विग्रहे विश्रवणशब्दात् अपत्यार्थे **शिवादिभ्योऽण्**[३] इति सूत्रेण विश्रवणशब्दस्य शिवादिगणे पठितत्वात् अण्प्रत्यये कृते विश्रवण + अण् इति स्थिते, अनुबन्धलोपे विश्रवण + अ इति जाते, णित्वादाद्यचो वृद्धौ कृतायां, भत्वादिकारलोपे वैश्रवण इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **वैश्रवणः** इति रूपं सिद्ध्यति। विश्रवणपुत्रः कुबेर इत्यर्थः।

**कुबेरः** इत्यमरः।[४] यथा –

**कुबेरस्त्र्यम्बसखो यक्षराड् गुह्यकेश्वरः।**
**मनुष्यधर्मा धनदो राजराजो धनाधिपः ।।**
**किं नरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।।**

**शिवः** इति शब्दकल्पद्रुमः।[५]

यथा महाभारते[६] – **धन्वन्तरिधूमकेतुः स्कन्दो वैश्रवणस्तथा** इति।

---

१. भाग.१.४.७ २. उ.प.२९.१४ ३. अष्टा.४.१.१९२
४. अ.को.१.४.४१ ५. शा.क.द्रु.भा.४,पृ.५२३ ६. महा.१३.१७.१०३

**श्लोकसन्दर्भा:**

5-29-14-b   5-130-8-c   5-130-9-b

**९५. सैन्धवक:**

**ततः सैन्धवको राजा द्रुपदं विशिखैस्त्रिभिः।**
**ताडयामास समरे स च तं प्रत्यविध्यत ।।**[१]

सिन्धुषु जातो मनुष्यस्तत्कर्म वेति विग्रहे सिन्धुशब्दात् **मनुष्यतत्स्थयोर्वुञ्**[२] इति वुञ्प्रत्यये सिन्धु + वुञ् इति स्थिते, अनुबन्धलोपे सिन्धु + वु इति जाते, **युवोरनाको**[३] इति सूत्रेण वुस्थाने अकादेशे सिन्धु + अक इति स्थिते, **ओर्गुणः**[४] इति उवर्णान्तस्य भस्य गुणे कृते सिन्धो + अक इति जाते, **एचोऽयवायावः**[५] इति सूत्रेण अकारस्थाने अवादेशे सिन्ध् + अ + अक इति स्थिते जित्वादाद्यचो वृद्धौ सत्यां सैन्धव् + अक इति जाते ततः प्रातिपदिकत्वात सौ, रुत्वे विसर्गे च **सैन्धवकः** इति रूपं सिद्ध्यति। जयद्रथः इत्यर्थः।

**सिन्धुदेशाधिपतिः जयद्रथः** इति शब्दकल्पद्रुमः।[६]

**९६. भौवन:**

**भौवनः सह शक्रेण बहुचित्रं विशां पते।**
**रूपाणि कल्पयामास त्वष्टा धात्रा समाभिभो।**[७]

भुवनस्य कर्ता भुवनस्येदं वा इति विग्रहे **तस्येदम्**[८] इति सूत्रेण भुवनशब्दात् अणप्रत्यये कृते भुवन + अण् इति स्थिते अनुबन्धलोपे भुवन + अ इति जाते,

१. भी.प.४३.५३   २. अष्टा.४.२.१३४   ३. अष्टा.७.१.१
४. अष्टा.६.४.१४६   ५. अष्टा.६.१.७८   ६. शा.क.द्रु.भा.५,पृ.४१४
७. उ.प.५५.७   ८. अष्टा.४.१.९२

भत्वेनाकारलोपे, णित्वादाद्यचो वृद्धौ सत्यां भौवन इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **भौवनः** इति रूपं सिद्ध्यति। विश्वकर्मा इत्यर्थः।

यथा आप्टे[१] – **देवानां शिल्पकारः विश्वकर्मा** इति।

**श्लोकसन्दर्भाः**

5.14.4.a    5.55.9.b    5.55.10.b    5.55.11.b

**९७. कैतव्यम्**

**उलुकं चैव कैतव्यं ये च सारस्वता गणाः।**
**नकुलः कल्पयामास भागं माद्रवतीसुतः ॥**[२]

कितवस्य भावः कर्म वा इति विग्रहे कितवशब्दात् **गुणवचनब्राह्मणादिभ्यः कर्मणि च**[३] इति सूत्रेण ष्यञ्प्रत्यये कृते कितव + ष्यञ् इति स्थिते, अनुबन्धलोपे कितव + य इति जाते, ञित्वादाद्यचो वृद्धौ कृतायां भत्वेनाकारलोपे कृते कैतव्य इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **कैतव्यम्** इति रूपं सिद्ध्यति।

कितवः नाम **कितं वायति कितेन वाति वा** इति शब्दकल्पद्रुमः[४] ।

**धूर्तः** इत्यमरः[५], यथा –

**धूर्तोऽक्षदेवी कितवोऽक्षदूर्धो द्यूतकृत्समाः।**
**द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥**

**धूर्तः, कपटी, वञ्चकः** इति आप्टे[६] । अर्थात् दुष्टस्वभावेन युक्तः कैतव्यः इति। उद्योगपर्वणि कैतव्यः इति पदेन उलुकस्य ग्रहणं कृतमस्ति, न तु दुष्टार्थकस्य।

---

१. वा.शि.आ.को.पृ.७५५    २. उ.प.५६.२३    ३. अष्टा.५.४.११४
४. श.क.द्रु.भा.२,पृ.१२७    ५. अ.को.२.३०१,३०२    ६. वा.शि.आ.को.पृ.३२०

यथा मेदिनीकोशेऽपि[1] —

**कैतवं तु छले द्यूते कैरवः कितवे रिपौ।**
**नपुंसकञ्च कुमुदे चन्द्रिकायान्तु कैरवी ।।**

**श्लोकसन्दर्भाः**

5.157.3.a 5.158.1.a 5.159.2.b 5.159.5.b 5.159.6.a
5.160.1.b 5.160.2.b 5.160.9.b

**९८. खाण्डवम्**

**यश्चैव देवान्खाण्डवे सव्यसाची**
**गाण्डीवधन्वा प्रजिगाय सेन्द्रान्।**
**उपाहरत्फल्गुनो जातवेदसे**
**यशो मानं वर्धयन्पाण्डवानाम् ।।[2]**

खाण्डव्यां तदाख्यायां प्रसिद्धायां नगर्य्यां जातमिति[3] विग्रहे **तत्र जातः**[4] इति सूत्रेण खाण्डवीशब्दात अण्प्रत्यये कृते खाण्डवी + अण्, अनुबन्धलोपे खाण्डवी + अ इति जाते, णित्वसामर्थ्यात् पुनः वृद्धी कृतायां भत्वादीकारलोपे, खाण्डव इति जाते, ततः प्रातिपदिकत्वात् सौ, सोरमि पूर्वरूपे च **खाण्डवम्** इति रूपं सिद्ध्यति।

यथा आप्टे[5] — ''कुरुक्षेत्रप्रदेशे विद्यमानम् इन्द्रस्य प्रियवनम्। तत् वनं कृष्णार्जुनयोः साहाय्येन अग्निः अज्वालयत्।''

खाण्डवी नाम हिमवतः बृहद्वनं खण्डयित्वा चन्द्रवंशीयेन राज्ञा सुदर्शनेन निर्मिता या पुरी सा च ''न्द्रवंशीयसुदर्शनराजकृतहिमवत्पर्वतनिकटस्थपुरीविशेषः'' इति शब्दकल्पद्रुमः।[6] ''वनविशेषः'' इति तत्रैव।

१. मे.को.१६०.३५ २. उ.प.२२.१३ ३. शा.क.द्रु.भा.२,पृ.२७८
४. अष्टा.४.३.२५ ५. वा.शि.आ.को.पृ.३६६ ६. शा.क.द्रु.भा.१,पृ.२७९

**श्लोकसन्दर्भाः**

5.51.9.a 5.59.8.a 5.61.8.a 5.122.52.b 5.155.7.a
5.155.26.b 6.94.5.a

**९९. जारासन्धिः**

**मागधश्च जयत्सेनो जारासन्धिर्महाबलः।**
**अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ।।**[१]

जरासन्धस्यापत्यम् इति विग्रहे जरासन्धशब्दात् अपत्यार्थे **अत इञ्**[२] इति षष्ठ्यन्ताददन्तात् इप्रत्यये कृते जरासन्ध + इञ् इति स्थिते अनुबन्धलोपे जरासन्ध + इ इति जाते ञित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे जारासन्धि इति जाते सति **प्रातिपदिकत्वात्** सौ, रुत्वे विसर्गे च **जारासन्धिः** इति रूपं सिद्ध्यति । सहदेव इत्यर्थः । न तु युधिष्ठिरभ्राता सहदेवः।

श्लोकसन्दर्भाः

5.49.44.a 5.56.8.a

**१००. द्रौपदः**

**य एष द्रौपदो राजंस्तव सैन्ये महारथाः।**
**शिखण्डी समराकाङ्गी शूरश्च समितिञ्जयः ।।**[३]

द्रुपदस्यापत्यमिति विग्रहे द्रुपदशब्दात् **तस्यापत्यम्** इति सूत्रेण षष्ठ्यन्तात् अण्प्रत्यये कृते द्रुपद + अण् इति स्थिते, अनुबन्धलोपे कृते द्रुपद + अ इति जाते, भत्वेनाकारलोपे णित्वादाद्यचोः वृद्धौ सत्यां **द्रौपदः** इति रूपं सिद्ध्यति। उत्तर इत्यर्थः।

---

१. उ.प.१९.८ २. अष्टा.४.१.९५ ३. भी.प.१०३.७५

## १०१. गाण्डीवम्, गाण्डिवम्

**एवमेतन्महाराज यथा वदसि भारत।**
**युद्धे विनाशः क्षत्रस्य गाण्डीवेन प्रदृश्यते ।।**[१]
**सर्वा दिशः सम्पतता रथेन**
**रजोध्वस्तं गाण्डिवेनापकृतम्।**
**यदा द्रष्टा स्वबलं सम्प्रमूढः**
**तदा पश्चात्तप्स्यति मन्दबुद्धिः ।।**[२]

गाण्डीग्रन्थिरस्यास्तीति अथवा गाण्डिर्ग्रन्थिरस्यास्तीति विग्रहे गाण्डी अथवा गाण्डि शब्दात **गाण्ड्यजगात्संज्ञायाम्**[३] इति सूत्रेण व प्रत्यये कृते गाण्डी + व अथवा गाण्डि इति स्थिते प्रातिपदिकत्वात् सौ सोरमि पूर्वरूपे च **गाण्डीवम्** अथवा **गाण्डिवम्** इति शब्दौ सिद्ध्यतः। अर्जुनस्य धनुः इत्यर्थः।

ह्रस्वान्तगाण्डिशब्दस्य दीर्घान्तगाण्डीशब्दस्य च विषये श्रीमान् दीक्षितः लिखति – **ह्रस्वदीर्घयोः यणा तन्त्रेण निर्देशः** इति। अत्र तत्त्वबोधिनी – **प्रयुज्यते चोभया – अधिरोहति गाण्डिवं महेषौ, गाण्डीवी कनलशिलानिभं भुजाभ्याम्** इति।

गाण्डिवधनुर्विषये महाभारते[४] यथा –

**देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः।**
**एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ।।**
**ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ।**
**त्रीणि पञ्चशतं चैव शक्रोऽशीति च पञ्च च ।।**
**सोमः पञ्चशतं राजा तथैव वरुणः शतम्।**

१. उ.प.३.१६ २. उ.प.४७.५५ ३. अष्टा.५.२.११० ४. महा.४.४१.५–८

**पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहन ।।**
**महावीर्यं महद्दिव्यमेतत्तद्धनुरुत्तमम्।**
**पूजितं सुरमर्त्येषु बिभर्ति परमं वपुः ।।**

**अर्जुनधनुः** इत्यमरः शब्दकल्पद्रुमे च।[1]

यथा महाभारते[2] एवं –

**यन्मां पूर्वमिहापृच्छः शत्रुसेनानिबर्हणम्।**
**गाण्डीवमेतत् पार्थस्य लोकेषु विदितं धनुः ।।**

**कार्मुकम्** इति मेदिनी,[3] यथा –

**गाण्डीवो गाण्डिवश्चास्त्री कामुकेऽर्जुनकार्मुके।**
**गालवस्तु मुनौ लोध्रे ताण्डवोऽस्त्री तृणान्तरे।**

**गाण्डीवशब्दस्य श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.5.10. b | 5 .22.10.a | 5.23.20.b | 5.23.26.b | 5.26.24.a |
| 5-47-6.a | 5 .47.47.a | 5.51.2.a | 5.51.3.b | 5.51.15.b |
| 5.53.1. b | 5.53.12.a | 5.56.27.b | 5.56.60.a | 5.58.22.a |
| 5.59.12. a | 5.63.5.b | 5.88.69.a | 5.94.37.a | 5.96.19.a |
| 5.136.5.b | 5.136.26.b | 5.139.30.b | 5.139.41.a | 5.140.7.a |
| 5.141.42.b | 5.153.25.b | 5.154.20.a | 5.155.4.a | 5.155.7.a |
| 5.164.4.a | 5.164.36.a | 5.166.31.b | 5.169.12.a | 6.19.34.b |
| 6.23.30.a | 6.41.1.a | 6.43.9.a | 6.45.16.b | 6.46.44.a |
| 6.48.22.a | 6.55.105.a | 6.55.113.b | 6.55.115.a | 6.55.126.c |
| 6.56.26.a | 6.67.11.a | 6.69.8.b | 6.74.30.a | 6.100.13.a |
| 6.108.14.b | 6.112.113.b | 6.114.54.b | 6.115.41.b | 6.116.19.b |

१. अ.को.२.२.४, शा.क.द्रु.भा.२,पृ.३१९     २. महा.४.३८.३६     ३. मे.को.पृ.१६०

**गाण्डिवशब्दस्य श्लोकसन्दर्भाः**

| | | | | |
|---|---|---|---|---|
| 5.47.58.a | 5.45.96.a | 5.51.11.a | 5.124.2.a | 5.155.5.b |
| 5.158.25.a | 5.158.28.a | 5.158.29.a | 6.22.10.a | 6.55.114.b |
| 6.55.116.a | 6.67.2.a | 6.67.3.c | | |

## १०२. कौन्तेयः

**अहं तु ताञ्शितैर्बाणैरनुनीय रणे बलात्।**
**पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः ।।**[१]

कुन्त्या अपत्यं पुमानिति विग्रहे कुन्तिशब्दात् **द्व्यचः**[२] इति सूत्रेण द्व्यचः स्त्रीप्रत्ययान्तादपत्ये ढक्प्रत्यये कृते कुन्ति + ढक् इति स्थिते, अनुबन्धलोपे कुन्ति + ढ इति जाते, **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[३] इति ढस्थाने एयादेशे कृते कुन्ति + एय इति जाते, **किति च**[४] इति आद्यचो वृद्धौ कृतायां भत्वादिकारालोपे च कौन्तेय इति जाते ततः प्रातिपदिकत्वात् सौ रुत्वे विसर्गे च **कौन्तेयः** इति रूपं सिद्ध्यति। अर्जुनस्य नाम विशेषः।

श्लोकसन्दर्भाः

| | | | | |
|---|---|---|---|---|
| 5.6.17.b | 5.7.4.a | 5.8.14.b | 5.18.25.a | 5.19.27.b |
| 5.49.6.a | 5.50.5.a | 5.55.1.b | 5.55.3.a | 5.56.55.a |
| 5.63.3.a | 5.63.4.a | 5.77.2.b | 5.81.36.b | 5.81.55.a |
| 5.88.65.b | 5.122.29.a | 5.126.10.b | 5.136.3.a | 5.138.11.b |
| 5.138.20.b | 5.138.27.b | 5.139.57.a | 5.143.2.a | 5.151.25.b |
| 5.157.5.b | 5.158.32.b | 5.166.37.b | 5.195.1.a | 5.197.1.a |
| 6.15. 10.b | 6.19.2.b | 6.23.27.b | 6.24.14.a | 6.24.37.b |
| 6.24.10.a | 6.25.9.b | 6.25.39.b | 6.27.22.b | 6.28.35.b |
| 6.29.8.a | 6.30.6.b | 6.30.16.b | 6.31.7.a | 6.31.10.b |

१. उ.प.३.१३ २. अष्टा.४.१.१२१ ३. अष्टा.७.१.२ ४. अष्टा.७.२.११८

| | | | | |
|---|---|---|---|---|
| 6.31.23.b | 6.31.27.b | 6.31.31.b | 6.35.1.a | 6.35.31.b |
| 6.36.4.a | 6.36.7.b | 6.38.20.b | 6.38.22.a | 6.40.48.a |
| 6.40.50.b | 6.40.60.a | 6.41.41.a | 6.41.55.b | 6.41.83.a |
| 6.50.65.a | 6.55.43.b | 6.59.17.a | 6.61.29.b | 6.69.15.a |
| 6.71.28.a | 6.74.17.a | 6.77.36.a | 6.80.3.b | 6.80.42.c |
| 6.80.44.a | 6.80.46.a | 6.82.8.a | 6.92.20.a | 6.97.56.a |
| 6.98.12.a | 6.102.34.a | 6.103.65.b | 6.103.82.a | 6.110.8.a |
| 6.110.10.a | 6.112.58.a | 6.112.120.b | 6.112.136.b | 6.112.138.a |
| 6.115.18.b | 6.117.9.a | 6.117.21.b | | |

**१०३. आम्बिकेय:**

**अनामयं पृच्छति त्वाम्बिकेयो**
**वृद्धो राजा धृतराष्ट्रो मनीषी ।।**
**कच्चिद्भीम: कुशली पाण्डवण्यो**
**धनञ्जयस्तौ च माद्रीतनूजौ ।।**[१]

अम्बिकाया: अपत्यं पुमानिति विग्रहे अम्बिकाशब्दात् **स्त्रीभ्यो ढक्**[२] इति स्त्रीप्रत्ययान्तात् ढक्प्रत्यये अम्बिका + ढक् इति स्थिते, अनुबन्धलोपे अम्बिका + ढ इति जाते, **आयनेयीनीयिय: फढखछघां प्रत्ययादीनाम्**[३] इति सूत्रेण ढस्थाने एयादेशे अम्बिका + एय इति जाते, कित्वादाद्यचो वृद्धौ कृतायां भत्वेनाकारलोपे च आम्बिकेय इति जाते, तत: प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **आम्बिकेय:** इति रूपं सिद्ध्यति। अम्बिकानन्दन: धृतराष्ट्र इत्यर्थ: ।

**श्लोकसन्दर्भा:**

5.33.103.b 5.37.60.a

---

१. उ.प.२३.४ २. अष्टा.४.१.१२० ३. अष्टा.७.१.२

## १०४. हास्तिनपुरम्

**न हास्तिनपुरे राजन्नवकाशोऽभवत्तदा।**
**राज्ञां सबलमुख्यानां प्राधान्येनापि भारत ।।**[१]

हस्तिना नृपेण निवृत्तमिति हस्तिनपुरम्, हस्तिनपुरे भवमिति विग्रहे हस्तिनपुरशब्दात् **तत्र भवः**[२] इति भवार्थ अण्प्रत्यये कृते हस्तिनपुर + अण् इति स्थिते अनुबन्धलोपे कृते हस्तिनपुर + अ इति जाते णित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे कृते हास्तिनपुर इति जाते ततः प्रातिपदिकत्वात् सौ, अमादेशे पूर्वरूपे च **हास्तिनपुरम्** इति रूपं सिद्धम्। हस्तिनपुरे भवमित्यर्थः।

**श्लोकसन्दर्भाः**

5.32.2.a 5.82.10.a 5.145.1.a 5.153.35.b 5.170.21.b
5.196.12.b

## १०५. रौक्मिणेयः

**यो रूक्मिणीमेकरथेन भोज्या**
**मुत्साद्य राज्ञां विषयं प्रसा।**
**उवाह भार्या यशसा ज्वलन्ती**
**यस्यां जज्ञे रौक्मिणेयो महात्मा ।।**[३]

रुक्मिण्याः अपत्यं पुमानिति विग्रहे रुक्मिणीशब्दात् **स्त्रीभ्यो ढक्**[४] इति स्त्रीप्रत्ययान्तात् ढक्प्रत्यये कृते रुक्मिणी + ढक् इति स्थिते अनुबन्धलोपे कृते रुक्मिणी + ढ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[५] इति ढस्य

---

१. उ.प.१९.२८ २. अष्टा.४.३.५३ ३. उ.प.४७.६८
४. अष्टा.४.१.१२१ ५. अष्टा.७.१.२

एयादेशे कृते रुक्मिणी + एय इति जाते कित्वादाद्यचो वृद्धौ सत्यां भत्वादीकारलोपे च रौक्मिणेय इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **रौक्मिणेयः** इति रूपं सिद्धम्। प्रद्युम्न इत्यर्थः।

**श्लोकसन्दर्भाः**

5.154.16.b

**१०६. औशीनर :**

**अम्बरीषस्य मान्धातुर्ययातेर्नहुषस्य च।**
**भरतस्य दिलीपस्य शिबेरौशीनरस्य च ॥**[१]

उशीनराणां राजा इति विग्रहे उशीनरशब्दात् **जनपदशब्दात्क्षत्रियादञ्**[२] इति सूत्रेण षष्ठ्यन्तात् अप्रत्यये कृते उशीनर + अञ् इति स्थिते अनुबन्धलोपे कृते उशीनर + अ इति जाते ञित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे च कृते औशीनर इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च औशीनरः इति रूपं सिद्ध्यति। उशीनरराजा शिबिः इत्यर्थः।

**श्लोकसन्दर्भाः**

5.116.2.b 5.119.10a 5.120.8.a 6.1.7.a

महाभारतस्थभीष्मपर्वणि एकादशेऽध्याये सप्तत्रिंशतः श्लोकादारभ्य सप्तषष्टिश्लोकपर्यन्तं बहूनां जनपदवाचिशब्दानां प्रयोगः कृतः व्यासेन। तेषु शब्देषु **जनपदे लुप्**[३] इति सूत्रेण तद्धितप्रत्ययस्य लुप् भवति, यथा –

**१०७. कम्बोजाः**

**कम्बोजा ऋषिका ये च पाश्चिमानुपकाश्च ये।**
**शकानां पल्हवानां च दरदानां च ये नृपाः ॥**[४]

---

१. उ.प.८८.१९ २. अष्टा.४.१.१६८ ३. अष्टा.४.२.८४ ४. उ.प.४.१५

कम्बोजानां निवासः जनपदः इति विग्रहे कम्बोजशब्दात् **तस्य निवासः**[१] इति सूत्रेण अण्प्रत्यये कृते कम्बोज + अण् इति जाते **जनपदे लुप्**[२] इति सूत्रेण जनपदे वाच्ये चातुरार्थिकतद्धितप्रत्ययस्य लुपि कृते कम्बोज इति जाते, **लुपि युक्तवद् व्यक्तिवचने**[३] इति सूत्रेण लुपः प्रवृत्तेः प्राक् प्रत्ययप्रकृतेर्यल्लिङ्गं वचनं ते एव लुपि सति भवतः, अतः पूर्वं कम्बोजानाम् इति पुल्लिङ्गबहुवचनस्य प्रयोगः आसीत्। अतः पुल्लिङ्गबहुवचने जसः उत्पत्तौ कम्बोज + जस् इति स्थिते जकारस्य **चुटू**[४] इति सूत्रेण इत्संज्ञायां **तस्य लोपः**[५] इति जलोपे कृते कम्बोज + अस् इति जाते **प्रथमयोः पूर्वसवर्णः**[६] इति पूर्वसवर्णदीर्घ कृते कम्बोजास् इति जाते, ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च कम्बोजाः इति रूपं सिद्ध्यति। कम्बोजदेशीयाः इत्यर्थः।

एतादृशाः निम्नलिखिताः जनपदवाचिशब्दाः सन्ति । यथा – शूरसेनाः, कलिङ्गाः, बोधाः, मत्स्याः, सुकुट्यः, कुन्तलाः, काशिकोशलाः, चेदयः, वत्साः, करूषाः, भोजाः, सिन्धवः, पुलिन्दकाः, दशार्णाः, मेकलाः, उत्कलाः, एकपृष्ठा, युगन्धरा, मद्रा भुजिङ्गाः, काशयः, अपरकाशयः, जठराः, कुक्कशाः, सुदाशार्णाः, कुन्तयः, अवन्तयः, अपरकुन्तयः, गोविन्दाः, मन्दकाः, पण्डाः, विदर्भाः, अश्मकाः, पांसुराष्ट्राः, गोपराष्ट्राः, पनीतकाः, आदिराष्ट्राः, सुकुट्टाः, बलिराष्ट्रम्, वानराः, प्रवाहाः, वक्राः, वक्रभयाः, शकाः, विदेहकाः, विजयाः, अङ्गाः, वङ्गाः, कलिङ्गाः, यकृल्लोमाः, मल्लाः, सुदेष्णाः, प्राहूताः,ध्अपरन्ध्र आ. शद्राः, पलवाः, चर्मखण्डिकाः, अटवीशबराः, मरुभौमा, उपावृश्चाः, अनु सुराष्ट्राः, केकयाः, कुट्टाः, अपरान्ताः, काक्षाः, द्वैधेयाः, अन्ध्राः, अन्तगिर्याः, बहिगिर्याः, अङ्गमलदाः, मगधाः, मानवर्जकाः, मह्त्तराः, पुण्ड्राः, भार्गाः, किराताः, सदोष्णाः, प्रमुद्राः, शकाः, निषादाः,

१. अष्टा.४.२.६९  २. अष्टा.४.२.८४  ३. अष्टा.१.२.५१  ४. अष्टा.१.३.७

५. अष्टा.१.३.९  ६. अष्टा.६.१.१०२

निषधाः, आनर्ताः, नैर्ऋताः, दूगूलाः, प्रतिमत्स्याः, कशलाः, कुनटाः, तीरग्रहाः, रहस्यगणाः, तिलकाः, पारसिकाः, मधुमन्तः, पुकुत्सकाः, काश्मीराः, दर्शकाः, अभीसाराः, कुलूकाः, क्षुद्रकाः, दर्वीकाः, सकचाः, दर्वाः, वातजाः, उरगाः, बहुवाद्याः, सुदामानः, सुमल्लिकाः, वध्राः, करीषकाः, पुलिन्दाः, उपत्यकाः, वानायवः, दशापााः , रोमाणः, कुशविन्दवः, कच्छाः, गोपालकच्छाः, लाङ्गलाः, परवल्लकाः, किराताः, बर्बराः, सिद्धाः, विदेहाः, ताम्रलिङ्गकाः, ओष्ट्राः, पुण्ड्राः, मारिषाः, द्रविडाः, केरलाः, प्राच्याः, भूषिकाः, वनवासिनः, उन्नत्यकाः, विकल्पाः, मूषकास्तथाः, कर्णिकाः, कुन्तिकाः, नलकालकाः, चोलाः, कोङ्कणाः, मालवाणकाः, समङ्गाः, कोपताः, कुकुराः, अङ्गदाः, ध्वजिन्यः, उत्सवसङ्केताः, त्रिगर्ताः, सर्वसेनयः, त्र्यङ्गाः, केकरकाः, प्रोष्ठाः, परसञ्चरकाः, विध्याः, पुलकाः, पुलिन्दाः, कल्कलाः, मालकाः, मल्लकाः, अपरवर्तकाः, कुलिन्दाः, कलकाः, करण्ठाः, कुरकाः, मूषकाः, स्तनबालाः, सतियः, पत्तिपञ्जकाः, आदिदायाः, सिशलाः, स्तूबकाः, स्तनपाः, हृषी, विदर्भाः, कान्तीकाः, तङ्गणाः, परतङ्गणाः, यवनाः, कम्बोजाः, कुन्तलाः, हूणाः, पारतकाः, मरधाः, चीनाः, दशमालिकाः, शूद्राः, दरदाः, पशवः, खशिकाः, तुखाराः, पल्लवाः, गिरिगह्वराः, हंसमार्गाः, प्रभद्रकाः, कर भञ्जकाः इति।

इतोऽपि केचन जनपदवाचिशब्दाः सन्ति, यथा – कार्षिकः, कौशिजः, सौधः, पौतमलकः। अत्र सर्वत्रापि **तत्र जातः**[१] इति सूत्रेण अणप्रत्ययः, यथा –

**१०८. मौकः**

**शूरसेनाः कलिङ्गाश्च बोधा मौकास्तथैव च।**
**मत्स्याः सुकुट्य सौबल्याः कुन्तलाः काशिकोशलाः ।।**[२]

१. अष्टा.४.३.२५

२. भी.प.१०.३८

मुके जातः इति विग्रहे मुकशब्दात् तत्र जातः इति अण्प्रत्ययः। मुक + अण् इति स्थिते अनुबन्धलोपे मुक ।अ इति जाते णित्वादाद्यचो वृद्धौ कृतायां भत्वादकारलोपे कृते मौक इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **मौकः** इति रूपं सिद्ध्यति।

केचन जनपदवाचितद्धितान्तशब्दाः सन्ति यत्र **तत्र भव**[१] इति सूत्रेण अण्प्रत्ययः भवति, यथा – जाङ्गलाः, माहिषाः, आभीराः, भार्गाः इत्यादयः, प्रक्रिया पूर्ववत्।

**१०९. पार्वतीयः**

पर्वते भव इति विग्रहे **पर्वताच्च**[२] इति सूत्रेण छप्रत्यये कृते पर्वत + छ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[३] इति छस्थाने ईयादेशे पर्वत + ईय इति जाते भत्वेनाकारलोपे पार्वतीय इति जाते ततः **प्रज्ञादिभ्यश्च**[४] इति स्वार्थेऽपि पार्वतीय इति प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **पार्वतीयः** इति रूपं सिद्ध्यति।

**११०. द्वैधेयः**

**उपावृश्चानुपावृश्च सुराष्ट्राः केकयास्तथा।**

**कुट्टापरान्ता द्वैधेयाः काक्षाः सामुद्रिनिष्कुराः ।।**[५]

द्विधानाम्नि नगरे भवः इति विग्रहे **नद्यादिभ्यो ढक्**[६] इति ढक्प्रत्यये कृत द्विधा + ढक् इति स्थिते अनुबन्धलोपे कृते द्विधा + ढ इति जाते **आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्**[७] इति ढस्थाने एयादेशे कृते, कित्वादाद्यचो वृद्धौ सत्यां भत्वेनाकारलोपे द्वैधेय इति जाते ततः प्रातिपदिकत्वात् सौ, रुत्वे विसर्गे च **द्वैधेयः** इति रूपं सिद्ध्यति ।द्वैधेयवीराः इत्यर्थः।

१. अष्टा.४.३.५३ २. अष्टा.४.२.१४३ ३. अष्टा.७.१.२ ४. अष्टा.५.४.३८

५. भी.प.१०.४७ ६. अष्टा.४.२.९७ ७. अष्टा.७.१.२

एवं प्रकारेणात्र महाभारतस्थोद्योगभीष्मपर्वणोः ये प्रमुखतद्धितान्तशब्दाः सन्ति तेषां व्युत्पत्तिः, प्रक्रियाः, महाभारते सः शब्दः अन्यत्र कस्मिन्—कस्मिन् अर्थे प्रयुक्तः सहैव तस्य शब्दस्य इतरसंस्कृतकोशेषु के के अर्थाः प्रयुक्ताः सन्ति, इति प्रदर्शितः ।

अस्य पुस्तकलेखनकार्यस्य इदमपि प्रयोजनं यत् महाभारते प्रयुक्ताः नानाविधतद्धितान्तशब्दाः सन्ति येषां पठनं वयमाबाल्याद् कुर्मः परन्तु तेषामर्थं ज्ञातुमसमर्थाः भवामः । तेषां शब्दानामर्थज्ञानार्थमेवायं प्रयत्नः ।

**''इति शम्''**



जन्म ११.०६.१९८६

पितु: नाम —जनार्दन चौधरी

मातु: नाम—कान्तादेवी

महाराष्ट्रराज्यस्य अमरावतीमण्डले करजगांवनामकग्रामे प्राप्तजन्मन: डॉ. जयवन्त चौधरी महोदयस्य प्राथमिकं संस्कृतशिक्षणं राजस्थानस्य माउण्ट आबुनगरे संस्कृतगुरुकुले आरब्धम् । ततश्च गुजरातप्रदेशस्थे टंकाराग्रामे संस्कृतगुरुकुले उत्तरमध्यमा शास्त्री च समधिगत:। तत: पुण्यपत्तनविश्वविद्यालयात् व्याकरणशास्त्रस्य विशेषाध्ययनं विधाय आचार्यपदवीं सम्प्राप्य तिरुपतिस्थे राष्ट्रियसंस्कृतविद्यापीठे शिक्षाशास्त्रिपदवी, विद्यावारिधी सम्प्राप्ता वर्तते । विद्यार्हता– शास्त्री, M.A.,B.ed., SET, NET, JRE-Ph.D अनेन महोदयेन अखिलभारतीयगुरुकुलवाक्स्पर्धासु भाग: गृहित: पुरस्काराश्च प्राप्ता: । अयं महोदय: सम्प्रति कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालये व्याकरणविभागे सहायकप्राध्याकरूपेण सेवारत: विद्यते ।